ASIATIC SOCIETY OF BENGAL

ॐ
बुद्ध
नमस्व:

॥ अथश्रीवसुधाकरग्रंथः प्रारभ्यते ॥ शुभमस्तु ॥

॥श्रीगणेशायनमः ॐतत्सत्सुखाब्धिमनुमतिगिरांयोऽनास्पदंमाययाजीवेशादिविभिदंनाकूखपवनाग्न
भूमिक्रद्वीलया स्वेषांस्थूलतमांसिवीक्ष्यतुमतिंलोकेऽवतीर्णः प्रभुर्लिङ्गात्माकरुणार्द्रधीर्विजयतांश्री
साम्बमूर्त्तिःशिवः १ क्षोणीमंडलमंडनेधनवतांप्रज्ञावतांसौख्यदे वंडछिद्रन्तदखंडनेजयपुरंदंभ्रान्मु
हुर्दंडयन् नीत्यंसंप्रतिपालयन्विनयिनःपाखंडिनःखंडयन्अस्तिश्रीनृपरामसिंहसुमतिःसर्वंडितानंदयन्
न्॥२॥तस्यश्रीरविवंशमानससरः पद्मस्यसत्कीर्त्तिसद्गन्धाकृष्टसुधीरवीरमधुपप्रष्टपास्तंततेर्नृपतेः॥भूदेवाम
रवन्दनीयचरणश्रीमेनकानंदिनी॥स्वातानन्दनवास्तवन्दनरणोन्नरक्तिः समस्तेश्वरे॥३॥मानोकर्मजपुण्य
बीजनवसंस्काराङ्कुराधोन्नितोजातःकल्पलतेवशैवजनसत्सङ्गाम्बुसिक्ताभृशाम्॥संदृष्ट्वानिजपार्श्वव
र्त्तिजनसद्धृत्सवृकेविस्तृतातज्ञेशार्चनपुष्पकीर्तिस्फुरन्निंविद्वाम्पुरत्रानयत्॥४॥तज्ज्ञात्वाशिवपादपङ्कजर
जः श्रीमान्स्वरूपोनृपः श्रीमच्छाकुररामसिंहनृपतिर्वीरेणप्रमाणेर्युतः॥कार्यःसंग्रहसत्पवोचदथतत्सुष्ठुयथा
बुद्ध्ययंश्रीमच्छैवसुधाकरोमतिमतांल्हादायसंतन्यते॥५॥अथश्रीशिवार्चनस्यधर्मार्थकाममोक्षहेतुत्वा
त्सत्कारःप्रदर्श्यते॥तत्रपाराशरपुराणे॥ब्राह्मणःसर्वसिद्ध्यर्थंकुर्याच्छंकरपूजनं॥वृत्रविघ्नादिदेवानां॥

पद्माप्नोति शिवपूजया ॥ २ ॥ अष्टैश्वर्यं सुरत्वं च पदं गाणेश्वरं पूर्वकं ॥ सार्वभौमत्वमीशस्य पूजनादेव हि सिध्यति ॥ २ ॥
मनोहराः स्त्रियः सौख्यं कल्याणं तनयानि च ॥ अपवर्गेति धनं चापि पूजयाश्नुलिनः खलु ॥ ३ ॥ अश्वमेधसहस्रा
णि राजसूयशतानि च ॥ महेशार्चनपुण्यस्य कलां नार्हन्ति षोडशीम् ॥ ४ ॥ लैंगे ॥ वस्तुनोस्ते न किंचिच्च महादेवस्य
पूजनात् ॥ निकृष्टोपि विमुच्येत ससंसारमहोदधेः ॥ १ ॥ सौरपुराणे ॥ अप्येकदिवसं यस्तु पूजयति शंकरं ॥ सो
पियाति शिवस्थानं किं पुनर्बहुशो यजन् ॥ २ ॥ महाभारते ॥ भित्त्वा भित्त्वा च कृत्वानि हत्वा सर्वमिदं जगत् ॥ योऽर्च
येति विरूपाक्षं न स पापेन लिप्यते ॥ १ ॥ वायवीयसंहितायां ॥ ब्रह्मघ्नो वा सुरापो वा स्तेयी वा गुरुतल्पगः ॥ मातृहा पितृहा
वापि वीरहा भ्रूणहापि वा ॥ संपूज्य शंकरं भक्त्या शिवं दक्षकारणं ॥ तैस्तैः पापैर्विमुच्येतेत्यादि ॥ पाद्मे ॥ महेश्वर
कृतं सर्वं त्रैलोक्यं सचराचरं ॥ तेनार्चितं भवेद्विश्वं येन नत्वा महेश्वरे इति ॥ १ ॥ भविष्यपुराणे ॥ लिंगे देवो महादेवः
सर्वदेवनमस्कृतः ॥ अनुग्रहाय लोकानां तस्मान्नित्यं प्रपूजयेत् ॥ १ ॥ तस्मात्सोऽनुमतो भूत्वा यावज्जीवं प्रतिज्ञया ॥
अर्चयेत महादेवमापन्नोपि महामुने ॥ १ ॥ वरं प्राणपरित्यागः शिरसो वापि कर्तनं ॥ न त्वसंपूज्य भुंजीत भगवंतं
त्रिलोचनं ॥ २ ॥ स्फुटं निर्दहते यस्त्वयावर्जो विराशिवार्चनं ॥ मनुष्यचर्मणा नद्धः सत्त्वहीनो न संशयः ॥ ३ ॥ न हि लिंग

र्चनात्किंचित्पुण्यमभ्यधिकं क्वचित्॥ इतिविज्ञाय यत्नेन पूजनीयः सदाशिवः॥४॥ आकाशं लिंगमित्याहुः पृथिवी तस्य पीठिका
आलयः सर्वभूतानां लयनाल्लिंगमुच्यते॥५॥ यो लिंगं द्वेष्टि संमोहात्सर्वदेवनमस्कृतं॥ स रौरवनरकगामी स्यात्तस्य संभाष
णादपि॥६॥ लिंगपुराणे॥ लिंगे तु पूजिते सर्वमर्चितं स्याच्चराचरं॥ तस्मात्सदार्चनं कार्यं लिंगस्य स महात्मनः॥७॥ अ
नेकजन्मसाहस्रं भ्राम्यमाणस्तु योनिषु॥ कः समाप्नोति वै मुक्तिं लिंगार्चनमृते नरः॥८॥ स्कंदपुराणे॥ मनसा चिंतयेद्य
स्तु पूजयामि हरं वरं॥ अशक्तो नास्ति चेद्द्रव्यं यस्य वापि स मध्यमे॥ स तया श्रद्धया पूतो विमुक्तः सर्वपातकैः॥९॥ य
स्य तत्त्वं॥ ब्रह्मादयोपि न जानंति॥ यस्माच्च ब्रह्मादय उत्पद्यंते॥ तस्य पूजनेन चतुर्वर्गप्राप्तिरित्यत्र किमाश्चर्यं॥ तथा च
भागवते॥ देवान्प्रति ब्रह्मणो वाक्यम्॥ नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वं॥ विदुः प्रमाणं बलवीर्ययोर्वा तस्या
त्मतंत्रस्य क उपायविंदेत्॥ यज्ञो विष्णुः॥ महाभारते दानधर्मे श्रीकृष्णवाक्यं॥ ईडितुं च महादेवं न मे शक्तिरभूत्तदा॥ ततो मामब्रवी
द्देवः पद्मपत्रनिभेक्षणं॥१॥ तत्रैव उपमन्युवाक्यं॥ श्रीकृष्णं प्रति॥ यं न ब्रह्मादयो देवा विदुस्तत्त्वेन नर्षयः॥ स्तोतव्यमर्च्यं वंद्यं च कः
स्तोष्यति जगत्पतिं॥२॥ तत्रैव युधिष्ठिरं प्रति भीष्मवाक्यं॥ ब्रह्मविष्णुसुरेशानां स्रष्टा च प्रभुरेव च॥ ब्रह्मादयः पिशाचांता
यं हि देवा उपासते॥३॥ महादेवं प्रति उपमन्युक्तं तत्रैव॥ ओं त्वं जगद्दक्षिणाद्गं गात ब्रह्माणं लोकसंभवम्॥ ॥

वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः ॥ १ ॥ युगान्ते चैव संप्राप्ते रुद्रमीशोऽसृजत्प्रभुः ॥ स रुद्रः संहरन्कृत्स्नं जगत्स्थावरजंगमं ॥ १ ॥ तत्रैव श्रीकृष्णं प्रति उपमन्युवाक्यं ॥ नास्ति शार्वसमो देवो नास्ति शार्वसमा गतिः ॥ नास्ति शार्वसमो दाने नास्ति शार्वसमो रणे ॥ १ ॥ क्वचित्पुराणे शिवस्य विष्णुसाम्यादिप्रदर्शनं तु ॥ त्रिवक्त्रवरस्य ॥ सत्यत्वप्रसाधनार्थं ॥ तथा च महाभारते हरिवंशे श्रीकृष्णं प्रति शिववाक्यं ॥ पुरा मैनाकमाश्रित्य तपस्त्वं लब्धकरोऽर्थदा ॥ तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाचर हि ॥ अहं त्वय्यस्त्वमजय्यस्त्वं मत्तः शूरतरस्तथा ॥ भचितासीव्यवोश्चैव यत्तत्तथा न तदन्यथा ॥ इति ॥ अतएव रामायणे ॥ विष्णोः शिवेन सह संग्रामे ॥ अधिकं मेनिरे विष्णुं इत्यत्र मेनिरे इत्युक्तम् ॥ तथा च बुद्ध्यादिजनकत्वेन तदुपास्यत्वेन तदज्ञाततत्त्वबलवीर्यकत्वेन च शिवस्य तिरस्कृतसाम्यातिशयत्वात्सर्वार्थसाधनं महापातकादि सर्वदुःखहरं नित्यं च तत्पूजनमवश्यमेव कर्तव्यम् ॥ ॥ इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे शिवपूजोत्कर्षवर्णने नाम प्रथमः किरणः ॥

१ ॥ एवं च शिवपूजनं भस्मरुद्राक्षधारणं विना न कार्यं तदुक्तं लैंगे ॥ विना भस्मत्रिपुंड्रेण विना रुद्राक्षमालया ॥ पूजितोऽपि महादेवो न तस्य फलदो भवेत् ॥ १ ॥ कंचिद्ब्राह्मणं प्रति विष्णुवचनं स्कंदसंहितायाम् ॥ २

विभूतिधारणंत्यक्त्वात्यक्त्वारुद्राक्षधारणं॥ मामंपूजयविश्वेशांशिवंलिंगस्वरूपिणं॥१॥सनत्कुमारसंहि
तायामपि॥ यथैवचांडालोच्छिष्टंश्राद्धार्थेनोपयुज्यते॥भूतिवर्जितंयत्तुनिर्भस्मैवंशिवार्चनं॥१॥दाया
दहीनोनपुनर्मृतःपिंडमवाप्स्यति॥तथाभस्मविहीनोपिशिवार्चनफलंवरम्॥२॥यथाक्तकन्यानुरहितोध्व
ध्वरोनैवशोभते॥ त्र्यंशोपसाधनोपेतंभस्महीनंशिवार्चनं॥३॥विभूतिर्भसितंभस्मक्षारंरक्षेतिभस्मनः॥
भवंतिपंचनामानिपंचभिर्हेतुभिर्भृशं॥४॥ऐश्वर्यकरणाद्भूतिर्भस्मसर्वाघभक्षणात्॥भासनाद्भसितंप्रोक्तंक्षा
रणात्क्षारमापदां॥रक्षाराक्षोगणेभ्यश्चरक्षणात्परिकीर्तितं॥देवीभागवते॥कीकटेषुविदेशेषुयत्रभूतिवि
भूषणः॥मानवस्तत्रवसेन्नित्यंकाशीक्षेत्रसमंहितत्॥१॥तथानास्यज्ञानंपरीक्षेतनकुलंनव्रतंतथा॥त्रिपुंड्राङ्कि
तभालेनपूज्यएवहिनारद॥तथा॥श्वपचोपिवरेण्योहिभूतिशासनमेश्वरं॥सोपियांगतिमाप्नोतिनतांयज्ञशतैर
पि॥येघोराराक्षसाःप्रेतायेचान्येक्षुद्रजंतवः॥त्रिपुंड्रधारिणंदृष्ट्वापलायंतेनसंशयः॥२॥भस्मधारणंशि
वपूजायामेवकर्त्तव्यंइत्येवंनियमोनास्ति॥किंतुसर्वेष्वपिकर्मसुभस्मधारणंकार्यं॥तथाचबृहज्जाबाले॥ये
भस्मधारणंत्यक्त्वाकर्मकुर्वंतिमानवाः॥तेषांनास्तिविनिर्मोक्षःसंसाराज्जन्मकोटिभिः॥१॥महापातकयुक्तानां

पूर्वजन्मकृतं सर्वतः ॥ त्रिपुंड्रोद्धूलनं दृष्ट्वा जायते कृतदेहं बुध ॥ इति शिवरहस्ये ॥ सर्वकर्मबहिर्भूतो भस्मधारण
वर्जितः ॥ भस्मना रहितं कर्म वृथा भवति सर्वथा ॥ १ ॥ विभूतिधारणं त्यक्त्वा कुर्वन्हैमतल्लामपि ॥ तत्फलं न समा
प्नोति पतितोपि भविष्यति ॥ २ ॥ संध्याशिवार्चनादीनि कर्माण्येतानि वस्तुतः ॥ वैदिकानि ततस्तेषु कर्तव्यं भस्म
धारणं ॥ ३ ॥ यथोपवीतरहितैः संध्या न क्रियते द्विजैः ॥ तथा संध्या न कर्तव्या विभूतिरहितैरपि ॥ ४ ॥ विभू
तिधारणं त्यक्त्वा यदि संध्यां करोति सः ॥ व्रत्यवेद्यवयेनासौ नाधिकारी तदा द्विजः ॥ ५ ॥ यथाधीत्यां त्यजो वे
दान्व्रत्यवेति तथा द्विजः ॥ व्रत्यवैति न संदेहः संध्याकृत्यस्य वर्जितः ॥ ६ ॥ न संविशंति पापानि भस्मनि श्वेत
तः सदा ॥ कर्तव्यमतियत्नेन ब्राह्मणैर्भस्मधारणं ॥ ७ ॥ यत्कृतं भस्मनिष्ठेन श्रीमहादेवसाइजनं ॥ तत्सर्वा
भीष्टदं तस्मात्कर्तव्यं भस्मधारणं ॥ ८ ॥ उद्धूलनत्रिपुंड्राभ्याममलं कृततनुः शिवं ॥ योर्चयिष्यति तत्तुल्यो नु
द्विकोवा भविष्यति ॥ ९ ॥ शिवगीताटीकायां वसिष्ठः ॥ न तत्स्नानं न तज्ज्ञानं न तद्ध्यानं जपो न सः ॥ त्रिपुंड्रेण विना येन
विप्रेण यदनुष्ठितं ॥ १ ॥ देवीभागवते ॥ न गायत्र्युपदेशोस्ति भस्मनो धारणं विना ॥ ततो धृत्वैव भस्मानि गायत्री
जपमाचरेत् ॥ १ ॥ गायत्री मूलमेवाहुर्ब्राह्मण्यं मुनिपुंगवाः ॥ सा च भस्मधारणाभावेन केनाप्युपदिश्यते ॥ २ ॥ २

कात्यायनोपि॥ श्राद्धे दाने जपे होमे वैश्वदेवे सुरार्चने॥ धृतत्रिपुंड्रः पूतात्मा मृत्युं जयति मानवः॥ देवीभागवते एकाद
शस्कंधे॥ भस्मदिग्धशरीराय यो ददाति धनं मुदा॥ तस्य सर्वाणि पापानि विनश्यंति न संशयः॥१॥ तथा भवि
ष्यपुराणे॥ सत्यं शौचं जपो होमस्तीर्थं देवादिपूजनं॥ तस्य व्यर्थमिदं सर्वं यस्त्रिपुंड्रं न धारयेत्॥१॥ आयुरादिसा
धनत्वाच्चेदं धार्यं॥ तथा च महाभारते॥ आयुःकामोथवा राजन् भूतिकामोथवा नरः॥ नित्यं वै धारयेद्भस्म मोक्ष
कामी च वै नरः॥१॥ देवीभागवते एकादशस्कंधे॥ एतच्छिरोव्रतं कुर्यात्संध्याकालेषु सादरं॥ यावद्विद्योदयस्ता
वन्नस्य विद्या खलूसमा॥१॥ शिरोव्रतमुद्धूलनमिति विदव्याते॥ असमा विद्या ब्रह्मविद्येति नीलकंठः॥ महापातका
दिपापनाशहेतुत्वाच्चेदं धार्यं॥ तथा च विष्णुधर्मोत्तरे नारदः॥ भस्मैव परमं पुण्यं ब्रह्मविष्णुशिवात्मकं॥ येन दृष्टेन
पापानि नाशमायांति सर्वथा॥१॥ महाभारते॥ आगम्यागमने राजन् प्रायश्चित्तं विधीयते॥ आर्द्रवस्त्रेण षण्मासा
न्विहार्यं भस्मशायिना॥१॥ एष एव तु सर्वेषामकार्याणां विधिर्भवेत्॥ हड्ड शातातपः॥ मद्यं पीत्वा गुरुदारांश्च ग
त्वास्तेयं कृत्वा ब्रह्महत्यां च कृत्वा॥ भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः॥१॥ पापानि कुर्वतो
पि पापसंगपरिहारार्थं भस्म धार्यं॥ न संविशंति पापानि स्फुलाहत शिवरहस्यवचनात्॥१॥ देवीभागवते॥ अग्नस्

णं येषां भस्मधारणपूर्वकं ॥ तेषां तद्भस्म धार्यं मे वस्यान्मुने नात्र विचारणा ॥ १ ॥ नित्यत्वाच्च भस्म सदा धार्यं ॥
तथा च तैत्तिरीअकश्रुतिः ॥ भूत्यै न प्रमदितव्यमिति ॥ १ ॥ रावणभाष्ये ॥ भूतिरत्र भस्मार्थे भस्मेति स्पष्टमुक्तम्
॥ सूतसंहितायां च तद्देवोपबृंहितं ॥ तद्यथा ॥ सत्यात्प्रमादिविकुलो भस्मनोद्धूलनादपि ॥ त्रिपुंड्रधारणाच्चै
व सदा न च्युतो भवेदिति ॥ १ ॥ सनत्कुमारसंहितायां तद्द्वैविध्यमुक्तम् ॥ तत्तु भस्म द्विविधं प्रोक्तं मुख्यं गौणं तथैव
च ॥ मुख्यं प्रोक्तं परं ब्रह्मन् गौणमन्यदिहोच्यते ॥ गौणं नानाविधं विद्धि ब्रह्मन् ब्रह्मविदां वर ॥ अग्निहोत्राग्निजं
तद्वद्विरजाहोमजं मुने ॥ औपासनसमुद्भूतं समिदग्निसमुद्भवं ॥ पचनाग्निसमुद्भूतं दावानलसमुद्भवं ॥ एते
षां भस्मभेदानां वर्णभेदेन च व्यवस्थोक्ता स्कान्दे ॥ ब्रह्मक्षत्रियवैश्यानां त्वग्निहोत्रसमुद्भवं ॥ शूद्राणां श्रोत्रिया
गारपचनाग्निसमुद्भवं ॥ १ ॥ अन्येषामनाथानां तु स्मृतं दावानलोद्भवं ॥ आश्रमभेदेनापि व्यवस्था तत्रैव ॥ समि
दग्निसमुद्भूतं धार्यं वै ब्रह्मचारिभिः ॥ अग्निहोत्रसमुद्भूतं गृहस्थैर्वनवासिभिः ॥ १ ॥ श्रौताग्निरहिता ये च तेषामौ
पासनोद्भवं ॥ २ ॥ वायवीये तु ॥ सर्वेषां गोमयजं चापि भस्मोक्तं ॥ तथा हि ॥ गवामग्नेर्भस्म संप्राप्तमग्निहोत्रोद्भ
वं तु वा ॥ वैवात्याग्न्युद्भवं वा विपक्वं प्रविस्रगंधि वा ॥ कपिलायाः शकृच्छस्तं गृहीतं गगने पतत् ॥ न क्लिन्नं ना ॥

तिकृतिनं नदुर्गंधिमच्चोषितं ॥ २ ॥ उपर्यधः परित्यज्य गृण्हीयात्स्यतितं यदि ॥ पीडीकृत्य शिवाग्नौ तु तत्क्षिपेत्
मूलमंत्रतः ॥ ३ ॥ अपक्वमतिपक्वं च संत्याज्यमसितं सितं ॥ आदाय वाससा लोड्य भस्माधारे विनिक्षिपेत् ॥ ४ ॥ भ
स्मसंग्रहणं कुर्याद्देवे तु द्वासिते सति ॥ उद्वासने कृते यस्माच्चंडं भस्म तु जायते ॥ ५ ॥ यद्वा द्विजा भस्म कुर्युः स
द्योनानीय गोमयं ॥ वामेन पात्रे संयोज्य घोरमंत्रेण निर्दहेत् ॥ ६ ॥ पुरुषेण समुद्धृत्य ईशानेन विशोधयेत् ॥ इत्थं
तु संस्कृतं भस्म अग्निरित्यादिमंत्रतः ॥ इत्यादि ॥ अस्य शिवाग्नेः रुद्राग्निशब्देनापि व्यवहृतस्य देवीभागवते ए-
कादशस्कंधे दशमेऽध्याये विस्तरेण निरूपणं कृतमिह विस्तरभयान्नोक्तमिति तत एवावधार्यम् ॥ शूद्रहस्ताद्द्विजै
र्भस्म न ग्राह्यं ॥ तदाह नारदः ॥ शूद्रहस्तस्थितं भस्म न हि धार्यं द्विजातिभिः ॥ शूद्रैरंत्यजहस्तस्थं न धार्यं भ-
स्म जातुचित् ॥ १ ॥ धारणे मंत्रानाह पुलस्त्यः ॥ अग्निरित्यादिभिर्मंत्रैः शुद्धं भस्माभिमंत्रितं ॥ शिवमंत्रेण वा धार्यं
मंत्रेणाष्टाक्षरेण वा ॥ गायत्र्या वापि देवर्षे मंत्रेण प्रणवेन वा ॥ एतेषां कल्पविशेषं स एवाह ॥ करोति शिवमंत्रे
ण यस्त्रिपुंड्रं द्विजोत्तमः ॥ त्र्यक्षः शूलधरः सौम्यः शिवलोके महीयते ॥ अष्टाक्षरेण मंत्रेण यः करोति त्रिपुंड्रकं ॥
विष्णोः पदमवाप्नोति गायत्र्या मुनिपुंगव ॥ प्राप्नोति ब्रह्मणो रूपं प्रणवेन न संशयः ॥ अष्टाक्षरमंत्रस्तु ॥ ॐ नमो

नारायणाय॥ गायत्र्यपि प्रसिद्धैव ज्ञेया॥ अथ धारणे वर्णाश्रमभेदेन मंत्रभेदमाह॥ लैंगे॥ त्र्यायुषमिति मंत्रे त्रि
मु. पुंड्रं ब्रह्मचारिणा॥ अग्निरित्यादिभिर्मंत्रैः पंचब्रह्ममयैस्तथा॥१॥ त्र्यंबकेति मंत्रेण तारेण प्रणवेन च॥ पंचाक्ष
रेण मंत्रेण प्रणवेनान्वितेन च॥२॥ त्रिपुंड्रं धारयेन्नित्यं गृहस्थश्च गृहाश्रमी॥ एवमेव सदा धार्यं संन्यासाश्रमवर्णि
भिः॥३॥ नमोंतेन त्रिविधेनैव धार्यं शूद्रैः स्त्रिया तथा॥ अन्येषामपि सर्वेषां विना मंत्रेण सुव्रत॥४॥ भस्मनो धारणं प्रो
क्तं नित्यं शैवागमेषु च॥ उद्धूलनं त्रिपुंड्रं च धारणं हि विधिं मतं॥५॥ उद्धूलनत्रिपुंड्रयोः समुच्चयेन धारणं कर्तव्यं॥
उद्धूलनं त्रिपुंड्रं च नित्यं धार्यं प्रयत्नतः॥ उद्धूलनं त्रिपुंड्रं च मनसापि न लंघयेत्॥६॥ इति केदारखंडे॥ समुच्चय
विधानात्॥ विश्वेश्वरसंहितायामपि॥ तस्मादुद्धूलनं पूर्वं त्रिपुंड्रं धारयेत् स्थिरं॥१॥ इति समुच्चयो विहितः॥ उद्धूलनं।
द्विविधं॥ पूजार्थं शुद्ध्यर्थं च॥ पूजार्थं सजलेन भस्मना कार्यं॥ शुद्ध्यर्थं तु केवलेन भस्मनैव॥ पूजाकाले हि सजलं
शुद्ध्यर्थं निर्जलं भवेदिति विश्वेश्वरसंहिताया वचनात्॥ दिवा वाथ दिवारात्रौ नारी वाथ नरोऽथवा॥ पूजार्थं सजलं भस्म ५
शुद्ध्यर्थं केवलं भवेत्॥ इति विश्वेश्वरसंहितायां॥ मध्याह्नादूर्ध्वमपि सजलस्यैव विधानात्॥ मध्याह्नात्प्राक् जलैर्युक्तं तो
यं तदनुवर्जयेदिति वचनं स्त्रीपत्यादिविषयं॥ तदुक्तं स्मृतिसंग्रहे॥ धार्यं भस्म त्रिसंध्यं तु गृहिणा जलसंयुतं॥ सर्वकाले भवे

त्रीणां यतीनां जलवर्जितं ॥ ५ ॥ वनस्थव्रतिकन्यानां दीक्षाहीनां नृणां तथा ॥ मध्याह्नात्प्राग्जलैर्युक्तं परतो जलव
र्जितं ॥ इति त्रिपुंड्रं सजलेनैव कार्यं ॥ तदुक्तं तत्रैव ॥ सर्वदा सजलं भस्म त्रिपुंड्रे गात्रधारयेत ॥ सूतसंहितायां ॥ भस्मना
सजलेनैव धारयेत त्रिपुंड्रकमिति ॥ तत्रैव ॥ शिवेन विष्णुना चैव ब्रह्मणा वज्रिणा तथा ॥ देवतान्निधृतं तस्मात्त्रिपुं
ड्रोद्धूलनात्मना ॥ २ ॥ उमादेव्या च लक्ष्म्या च वाचान्याभिश्च स्त्रियः ॥ सर्वैस्तु निधृतं तस्मात्त्रिपुंड्रोद्धूलनात्मना इति ।
। अथोद्धूलनप्रकारो जाबाले ॥ तत्रैते श्लोकाः ॥ प्रयतो भस्म गृह्णीयात्स्वयं वानुचरेण वा ॥ न चाङ्गुष्ठकं करेद्यानं
चाङ्घ्रिजले क्षिपेत ॥ १ ॥ यावंतः पतिता भूमौ भस्मनः परमाणवः ॥ तावद्वर्षसहस्राणि रौरवं नरकं व्रजेत ॥ २ ॥ भस्मा
न्यं तं सावधानो धारयेद्भस्म बुद्धिमान् ॥ आदरेण समादाय भस्मपात्रे निधापयेत ॥ ३ ॥ प्रक्षाल्य पादौ हस्तौ च संधि
राचम्य समाहितः ॥ गृहीत्वा भस्म नो मुष्टिं सद्योजातादिति गृही ॥ ४ ॥ प्राणायामत्रयं कृत्वा ध्यात्वाथैव सदाशिवं
॥ अग्निरित्यादिभिर्मंत्रैस्त्रिवारमभिमंत्र्य तत ॥ ५ ॥ ईशानेन पंचधा भस्म विकिरेन्मूर्ध्नि यत्नतः ॥ मुखे च तत्पुरु
षेणाघोरेण च हृदि ॥ ६ ॥ वामेन गुह्यदेशे तु त्रिदशास्थानभेदतः ॥ अष्टधा सद्योमंत्रेण पादद्वयमथान्ततः ॥
७ ॥ संध्यात्रये निशीथे च तथा पूर्वावसानयोः ॥ सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकं ॥ ८ ॥

संयोज्य वारिणा नस्य मानस्तोके इति मर्दयेत् ॥५॥ मध्यांगुलिभिरादाय तिसृभिर्मूलमंत्रितं ॥ अनामामध्यमांगुष्ठैरथ
वा स्यात्त्रिपुंड्रकं ॥६॥ अकारोनामिका प्रोक्ता उकारो मध्यमांगुलिः ॥ मकारस्तर्जनी तस्मात्ताभिः कुर्यात्त्रिपुंड्रकं ॥७॥
भ्रुवोर्मध्यात्समारभ्य यावदंतो भवेद्भ्रुवोः ॥ अकारो गार्हपत्याग्निर्भूरात्मा च रजोगुणः ॥८॥ ऋग्वेदश्च क्रियाशक्तिः
प्रातःसवनमेव च ॥ महादेवश्च रेखायाः प्रथमायाश्च देवता ॥९॥ उकारो दक्षिणाग्निश्च अंतरात्मा भुवर्यजुः ॥ सत्वं मा
ध्यंदिनसवनं इच्छाशक्तिस्तथैव च ॥१०॥ महेश्वरश्च रेखायाः द्वितीयायाश्च देवता ॥११॥ मकार आहवनीयोऽथ परमात्मा त
मो दिवा ॥ ज्ञानशक्तिः सामवेदस्तृतीयसवनं तथा ॥१२॥ दिवा सहेत्यथेः ॥ शिवश्चेति तृतीयायाः रेखायास्त्वधिदेवता
एतान्नित्यं नमस्कृत्य त्रिपुंड्रं धारयेच्छुचिः ॥१३॥ स्मरन्नमः शिवायेति ललाटे च त्रिपुंड्रकं ॥ स्वच्छाभ्यां नम इत्युक्त्वा धार
येत्सप्रकोष्ठयोः ॥१४॥ भीमायेति ततः पृष्ठे शिवाय जत्रुके तथा ॥ नीलकंठाय शिरसि क्षिपेत्सर्वात्मने नमः ॥१५॥ पापं च
नाशयेत्कृत्स्नमपि जन्मशतार्जितं ॥ कंठेनोपरि कृतं पापं नष्टं स्यात्तत्र धारणात् ॥१६॥ कंठे च धारणात्कंठ भोगादि
कृतपातकं ॥ बाह्वोर्बाहुकृतं पापं वक्षसि मनसा कृतं ॥१७॥ नाभ्यां शिश्नकृतं पापं पृष्ठे गुदकृतं तथा ॥ पार्श्वयोर्धा
रणात्पापं परस्त्र्यालिंगनादिकं ॥१८॥ तद्भस्मधारणं कुर्यात्सर्वत्रैव त्रिपुंड्रकं ॥ ब्रह्मविष्णुमहेशानां त्र्यग्नीनां च धा

भ्रा·सु·

७

रणं॥१९॥गुणलोकत्रयाणांचधारणंतेनदैवकृतं॥२०॥इति॥भस्मोपरिचंदनादिकंधार्यं॥तदुक्तंकौर्मे॥ वै
दिकैर्मंत्ररहितंचंदनागरुकुंकुमं॥तिर्यक्पुंड्रात्मनाधार्यंकांतिसौख्याभिलाषिभिः॥१॥पुंड्रोद्धृतश्चंदनाद्यैरिति
भस्मनसंत्यजेत्॥दत्त्वैतद्भस्मसंत्यागीकृत्तीत्र्यक्रोधवन्हितः॥२॥चंदनाद्युपरिष्टाच्चोधारयेद्भस्मवैदिकं॥लौकि
कंचंदनाद्यंतुभस्मोपरिनधारयेत्॥३॥भस्मचंदनादीनांत्यागेनधीर्नविद्यते॥चंदनादीन्यतोलौकिकान्येवा
त्रनसंशयः॥४॥दृष्टकांत्याद्यर्थंचंदनादेरुपरिभस्मनि॥धृतेकिंचिच्चंदनादेर्धारणस्यफलंनचेत्॥५॥उपरिष्टा
च्चंदनादेर्धृतेलेपिसितभस्मनि॥चंदनाद्युत्थभस्मोक्तफलादेःकोनिवारकः॥६॥त्रिपुंड्रधारणंमंत्ररहितंतुहीन
कार्यं॥तदुक्तंस्कंदालिंगे॥त्रिपुंड्रकंसदाकुर्यान्मंत्रपूतेनभस्मना॥मंत्रहीनंतुयःकुर्यात्पापभागीभवेन्नरःइति
॥१॥अत्रेदंबोध्यं॥एतादृशानिवाक्यानि॥अमंत्रकधारणनिंदाव्याजेनसमंत्रकतद्धारणमतिप्रशस्तमितिबो
धनेतात्पर्यवंति॥नत्वमंत्रकनिंदायामेवतात्पर्यवंतीतिभ्रमितव्यं॥नहिनिंदेतिन्यायात्॥सामान्यभस्मधारणवि
धिवाक्यानांसंकोचेगौरवात्॥अतएवछन्नापितद्धारणंस्मृतंदेवीभागवते॥नहिस्वेच्छयाकश्चिद्विधिमातिष्ठति॥
परत्वस्यमात्रस्यकेवलभस्मनापिसंभवेनविधेस्तस्यानपेक्षितत्वादेवमन्यस्मिन्नप्यन्यथाकरणेकृत्यं॥अतए ७

वृषपादस्पृष्टभस्मस्पर्शान्मृतस्य गतिर्जाबालेस्यादि पौराणिकं तु द्वेषः संगच्छते॥ उद्धूलनेष्य शाक्तश्चेत्त्रिपुंड्रा
दीनि धारयेत्॥ इत्यादिनाऽर्द्धचंद्रकलिकाकारादिकं ग्राह्यम्॥ वैष्णवादीनां दीपचतुरस्राद्याकार भस्मधारणस्य
पूर्वस्मृतत्वात्॥ ननु॥ एवं श्रुतिस्मृतीतिहासपुराणसिद्धकर्मव्यक्ताके भस्मधारणे केषांचिद्द्वेषो दृश्यते॥ तत्र
किंकारणमिति चेत्पूर्वाचरितमहापातकादिसंकीर्णं वंशजलवपाराशारोयं॥ महापापवतां नृणां वेदसिद्धे महेश्वरे॥ त्रिपुंड्रो
द्धूलनादौ विद्वेषः संप्रजायते॥ वासिष्ठलैंगे॥ येषां भस्मानि रुद्राक्षे विद्वेषो वर्तते हृदि॥ संकीर्णानां भवेद्धूल
त्तेषां वंशपरंपरा॥ भस्मोद्धूलनस्यैव शिरोव्रतमिति नाम्ना पाशुपतव्रतमिति नाम्ना चाथर्वशिरसि व्यवहा
रः॥ तथा च देवीभागवते एकादशस्कंधे॥ सर्वांगोद्धूलनं कुर्याच्छिरोव्रतसमाह्वयमिति॥ शिरोव्रतमिदं
नामसिरस्याथर्वणश्रुते रिति॥ शाखाभेदेषु नामानि व्रतस्यास्य विभेदतः॥ पश्यंते मुनिशार्दूलशाखास्वे
कं व्रतं हितदिति च॥ एवमुपक्रम्यातिमाहात्म्यं चास्य तत्रोक्तं॥ ॥इति श्रीमत्स्वामिसदानंदविरचिते शै
वसुधाकरे भस्मनिरूपणं नाम द्वितीयः किरणः॥२॥ ॥अथ रुद्राक्षमहिमा॥ बृहज्जाबाले॥ अथ
भुसुंडः कालाग्निरुद्रं पप्रच्छ॥ कथं रुद्राक्षोत्पत्तिस्तद्धारणे किं फलमिति॥ स होवाच भगवान्कालाग्निरुद्र

रु॰ द्विपुरवधार्थाय हरमीलिताक्षो भवं॥ नेत्रेभ्यो जलविंदवो भूमौ पतितास्ते रुद्राक्षा जाताः॥ सर्वानुग्रहार्थाय तेषां
नामोच्चारणमात्रेण दशगोदानफलं॥ दर्शनस्पर्शनाभ्यां द्विगुणं फलमतऊर्ध्वं वक्तुं न शक्नोमि॥ देवीभागव
ते एकादशस्कंधे॥ फलस्य दर्शने पुण्यं स्पर्शात्कोटिगुणं भवेत॥ शतकोटिगुणं पुण्यं धारणाल्लभते नरः॥१॥ ल
८ क्षकोटिसहस्राणि लक्षकोटिशतानि च॥ जपाच्च लभते नित्यं नात्र कार्या विचारणा॥२॥ शिवरहस्ये॥ रुद्राक्षद
र्शनेनापि भग्नपस्य घकुलक्षणात्॥ रुद्राक्षमालिकां कृत्वा कुरु रुद्राक्षधारणं॥१॥ रुद्राक्षधारणं कृत्वा भस्म
धारणपूर्वकं॥ कृत्वा नंतमसा पापौघनाशायासेन मुच्यते॥२॥ वेदस्याध्ययनं कार्यमुपवीतैर्यथा तथा॥ रुद्रा
क्षधारिभिः कार्यं सर्वदा शिवपूजनं॥३॥ विभूति धारणं कृत्वा कृत्वा रुद्राक्षधारणं॥ यः शिवं पूजयेद्भक्त्या स
मोक्षमधिगच्छति॥४॥ रुद्राक्षाण्युपकर्मस्व वौधायनं विधि॥ यस्तानि धारयन्गच्छति तिष्ठन्भिक्षन्निमिषन्नपि॥ सर्वाण्ये
नांसि तरति रुद्रो भूत्वा स्वभूतत्वं गति॥ वाशिष्ठे॥ खादन्मांसं पिबन्मद्यं संगच्छन्नंत्यजादिभिः॥ सद्यो भवति पूतात्मा
रुद्राक्षे शिरसि स्थिते॥१॥ देवीभागवते॥ अनेन भुक्तं देवेन भुक्तं यस्तु तथा भवेत्॥ पीतं रुद्रेण तत्पीतं घ्रातं घ्रातं शि ८
वेन तत्॥ देवीभागवते एकादशस्कंधे॥ रुद्राक्षधारणे लज्जा येषामस्ति महामुने॥ तेषां नास्ति विनिर्मोक्षः संसाराज्जन्म

कोटिभिः॥१॥ रुद्राक्षधारिणं दृष्ट्वा परिवादं करोति यः॥ उत्पत्तौ तस्य सांकर्यमस्त्येवेति विनिश्चयः॥२॥ तथा॥ रुद्रा
क्षधारिणे भक्त्या वस्त्रं धान्यं ददाति यः॥ सर्वपापविनिर्मुक्तः शिवलोकं स गच्छति॥१॥ रुद्राक्षधारिणं श्राद्धे भो-
जयेत्तु विमोदतः॥ पितृलोकमवाप्नोति नात्र कार्या विचारणा॥२॥ रुद्राक्षधारिणः पादौ प्रक्षाल्याद्भिः पिबेन्नरः॥
सर्वपापविनिर्मुक्तः शिवलोके महीयते॥३॥ तथा॥ स्मक्षालेषु वदनेषु रुद्राक्षस्तु विशिष्यते॥ शिवभक्ताय
शांताय दद्याद्रुद्राक्षमुत्तमं॥४॥ देवीभागवते एकादशस्कंधे॥ रुद्राक्षाणां कृताख्ये च तते वै भागवतोत्तमाः॥ रुद्राक्ष
धारणं कार्यं सर्वैः श्रेयोर्थिभिर्नृभिः॥१॥ तैर्भागवतो ब्रह्मा वैष्णवश्चैव शैवाः॥ कर्णपाशे शिखायां वा कंठे हस्ते त
थोदरे॥ महादेवस्य विष्णुश्च ब्रह्मा तेषां विभूतयः॥२॥ देवाश्चान्ये तथा भक्त्या रक्षन्तु रुद्राक्षधारिणः॥३॥ तथा॥
शिरसा धारिते कोटिः कर्णयोर्दश कोटयः॥ शतकोटिर्गले बद्धा मूर्ध्नि कोटिसहस्रकं॥१॥ अयुतं चोपवीते तु
लक्षकोटिर्भुजे स्थिते॥ मणिबंधे तु रुद्राक्षो मोक्षसाधनकः परः॥२॥ रुद्राक्षधारको भूत्वा यत्किंचित्कर्म वैदिकं
॥ कुर्वन्विप्रः महदाप्नोति तत्फलं॥३॥ तथा॥ यस्य संपूज्यते नित्यं रुद्राक्षः शंकरात्मकः॥ दरिद्रं वा
पि कुरुते श्रीमान्कुरुते तु सः॥१॥ नमःपूजनं श्रयधारा षोडशाभिस्तुतान्यूनैर्वोपचारैर्यथाधिकारं सवर्णवर्णभाषा

रु. धारणेन वा शैवपञ्चाक्षरेण कार्यम्॥ स्कांदे॥ स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने॥ प्रायश्चित्ते तथा श्राद्धे दीक्षा
काले विशेषतः॥ अरुद्राक्षधरो भूत्वा यत्किंचित्कर्म वैदिकं॥ कुर्याद्विप्रस्तु मोहेन नस्य वाप्नोति तत्फलं॥२॥ ब्र
१ ह्मोत्तरखंडे॥ रुद्राक्षं मस्तके बद्ध्वा शिरःस्नानं करोति यः॥ गंगास्नानफलं तस्य जायते नात्र संशयः॥१॥ बृहज्जाबाले
॥धात्रीफलप्रमाणं यच्छ्रेष्ठमेतदुदाहृतं॥ बदरीफलमात्रं च मध्यमं प्रोच्यते बुधैः॥२॥ अधमं चणकाकारं प्रक्रिये
षा मयोच्यते इत्यादि॥ रहस्यार्णवे॥ रुद्राक्षाणां फलं ग्राह्यं देवि सर्षपमात्रकं॥ सर्षपादधिका ग्राह्या आर्द्र धात्रीफ
लावधि॥१॥ तदर्द्धं क्षत्रियैर्ग्राह्यं वैश्यैर्ग्राह्यं तदर्द्धकं॥ तदर्द्धं संकरैर्ग्राह्यमेवं रुद्राक्षलक्षणं॥२॥ ब्राह्मणो बिभृ
याच्छ्वेतान् रक्तान् राजा तु धारयेत्॥ पीतान् वैश्यस्तु बिभृयात्कृष्णान् शूद्रस्तु धारयेत्॥३॥ स्वयमेव कृतद्वारं य
त्स्यादिति चोत्तमं॥ यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत्॥४॥ समान् स्निग्धान् दृढान् स्थूलान् कंटकैः संयुता
न् शुभान्॥ दृसान् क्षौमस्य सूत्रेण धारयेत्सर्वदा नरः॥५॥ निघर्षे हेमरेखाभा यस्य रेखा प्रदृश्यते॥ तदक्षमुत्तमं विद्या
त्तद्धार्यं शिवपूजकैः॥६॥ यत्तु॥ नान्तु विधारयेद्दमालां भक्त्येव धारयेदित्यादिपर्यालोचनया॥ धारयेत्॥ सर्वदा न ९
र इति वचनं मूत्रपुरीषोत्सर्गातिरिक्तकाले धारणविधायकमिति केचिदाहुः॥ तन्न॥ सर्वदापदस्य संकोचे मानाभा

वात्॥नाशुचिर्धारयेदित्यस्य जपमालामात्रकरणपवित्रत्वात्॥ पुरीषोत्सर्गादेः॥साक्षाद्धारणविधायकवचन
सद्भावाच्च॥तदाह बालिकालिंगे॥ जिघ्रन्नपि तथा चाश्नन् वदन्नपि संततं॥कुर्वन्नपि यथा गच्छन् विसृजन्नपि मा
नवः॥१॥रुद्राक्षधारणादेव सर्वैः पापैर्न लिप्यते॥२॥ विसृजन्मूत्रपुरीषं त्यजन्नित्यर्थः॥अशुचिर्वाप्यशुचिर्वा-
पि सर्वावस्थां गतोपि वा॥३॥इत्यादिलिंगवचनात्संपादितत्रैवोक्तं॥ शिखायामेकरुद्राक्षं त्रिशतं शिरसा वहेत्॥
षट्त्रिंशतं गले दध्यात् बाह्वोः षोडश षोडश॥१॥ द्वादशं मणिबंधेपि स्कंधे पंचशतं वहेत्॥ अष्टोत्तरशतैर्माला-
मुपवीतं प्रकल्पयेत्॥१॥ अस्मिन्पक्षे पंचदश कर्णे चत्वारि वामकर्णे इति शिष्टसमाचारात्॥ द्विसरं त्रिसरं वा
पि सराणां पंचकं तु वा॥ सराणां सप्तकं वापि बिभृयात्कंठदेशतः॥५॥ त्रिंशतं त्वधमं पंचशतं तन्मध्यमुच्यते॥ सहस्र
मुत्तमं प्रोक्तमेवं भेदेन धारयेत्॥२॥ इदं च धारणं विनिगमनाभावाद्यथासंभवमेव॥ ब्रह्मोत्तरखंडे॥ सहस्रं धारयेद्य-
स्तु रुद्राक्षान्वै धृतव्रतः॥ तं नमंति सुराः सर्वे यथा रुद्रस्तथैव सः॥१॥ अभावे तु सहस्रस्य बाह्वोः षोडश षोडश॥ एकं शिखा
यां करयोर्द्वादश द्वादश शिरोवहि॥२॥ द्वात्रिंशत्कंठदेशे तु चत्वारिंशच्च मस्तके॥ प्रत्येकं कर्णयोः षट्षट् वक्षस्यष्टोत्तरं
शतं॥३॥ यो धारयति रुद्राक्षान् रुद्रवत्सोपि पूज्यते॥ देवीभागवते एकादशस्कंधे॥ रुद्राक्षं यः शिखायां तत्तारतत्त्व-

मितिस्मरेत्॥कर्णयोस्तनयोर्ब्रह्म ... ॥ यज्ञोपवीते वै ... दिशः स्मरेत्॥ मुक्ताप्रवाल
स्फटिकवैडूर्यरत्नकांचनैः॥३॥ ... रुद्राक्षान् सत्रिशो भवेत्॥ केवलान्वापि रुद्राक्षानयथा लब्धा
विनिर्मितः॥२॥ यस्यांगे नापि रुद्राक्ष एकोपि बहुपुण्यदः॥ तस्य जन्म निरर्थं स्यात् त्रिपुंड्ररहितं यथा॥४॥ स्कांदे॥
१० ंकारमाहात्म्ये॥ रुद्राक्षाणां सहस्रं हि मुमुक्षुर्धारयेत्सदा॥ तदभावे शतं वापि दशैकमथवापि वा॥१॥ शंकरसंहिता
यां॥ धर्त्तव्यमेतत्सूत्रेण सौवर्णेनाथवा द्विजैः॥ तस्मात्सर्वप्रयत्नेन भस्मरुद्राक्षभूषणः॥१॥ न बिभ्यति वरारोहे एणाभवे
न्निर्णय एव सः॥ रुद्रस्याद्रवतया ... रुद्राक्षमिति कीर्तितं॥२॥ रुद्राक्षधारके ... परिपूर्णे कटाक्षवान्॥ रुद्राक्षधार
काः सर्वे रुद्राकाराः प्रकीर्तिताः॥३॥ ज्ञात्वा ... परसमं स्वर्गापवर्गप्रदं रुद्राक्षं विधिनामुना निजतनौ सम्य
क्सदा बिभ्रति॥ तेषां दग्धनिजेनसा ... तं जानाति को वा सुधीस्तस्मात् ... शंकरं ... पतिं न दिंतथा एवं मुख ...॥
॥ धारणे मंत्राः प्रोक्ता बृहज्जाबाले॥ सद्योजातेन मंत्रेण शिरसि वामदेवेन कर्णयोः॥ अघोरेण गले धार्यं तत्पुरुषेण ...॥२
॥ ईशानाख्येन मंत्रेण करयोर्धारयेत्सुधीः॥ ब्रह्मचारिगृहस्थानां वनस्थानां तथैव च॥ रुद्राक्षधारणे मंत्राः प्रोक्ता वै १०
विप्रयोगिनां॥ प्रणवेनैव संधार्या यतिभिः सर्वसिद्धये॥३॥ द्विजानां मंत्रतः प्रोक्तमन्येषां मंत्रवर्जितं॥ शिवरहस्ये॥ ॥

एकवक्त्रः शिवः साक्षाद्ब्रह्महत्यां व्यपोहति ॥ अवंध्यत्वं प्रतिस्तोतो वह्निस्तं भंकरोति वा ॥१॥ द्विवक्त्रो हरगौरी स्यात्गोव
धाद्यघनाशकृत् ॥ त्रिवक्त्रो ह्यग्निजन्माथपादराशिं व्रणाशयेत् ॥२॥ चतुर्वक्त्रः स्वयं ब्रह्मा नरहत्यां व्यपोहति ॥ पंचव
क्त्रस्तु कालाग्निरगम्यागम्यपापनुत् ॥३॥ षड्वक्त्रस्तु गुहो ज्ञेयो भ्रूणहत्यादिनाशयेत् ॥ सप्तवक्त्रस्त्वनंतः स्यात्स्वर्णस्ते
याद्विपापहृत् ॥४॥ विनायकोष्टवक्त्रः स्यात्सर्वानृतविनाशकृत् ॥ भैरवो नववक्त्रस्तु शिवसायुज्यकारकः ॥५॥ द
शवक्त्रः स्मृतो विष्णुर्भूतप्रेतभयापहः ॥ एकादशमुखो रुद्रो नानायज्ञफलप्रदः ॥६॥ द्वादशास्यस्तथादित्यः सर्वरोगनि
बर्हणः ॥ त्रयोदशमुखः कामः सर्वकामफलप्रदः ॥७॥ चतुर्दशास्यः श्रीकंठो वंशोद्धारकरः परः इति ॥ केदारखंडे
तु ॥ एकमुखादारभ्य षोडशमुखपर्यंतं रुद्राक्षास्तेषु एकमुखपंचमुखावतिश्रेष्ठाविति चोक्तं ॥ तथाहि ॥ आर
भ्यैकमुखं तावत्यावत्वक्त्राणि षोडश ॥ एतेषां द्वौ च विज्ञेयौ श्रेष्ठौ धारयतां नरैः ॥१॥ रुद्राक्षाणां पंचमुखस्तथैवैकमु
खः स्मृतः ॥ ये धारयंत्येकमुखं रुद्राक्षं नित्यमेव हि ॥२॥ जीवन्मुक्तास्तु विज्ञेया नरास्ते नात्र संशयः ॥ एकवक्त्रः शिवः
साक्षात् ब्रह्महत्यां व्यपोहति ॥३॥ ये रुद्राक्षं पंचमुखं धारयंत्यनिशं नराः ॥ रुद्रलोकं व्रजंत्येते भोगान्रुद्रेण भुंजते
॥२॥ इति ॥ पंचामृतं पंचगव्यं स्नानकाले प्रयोजयेत् ॥ रुद्राक्षस्य प्रतिष्ठायां मंत्रं पंचाक्षरं तथा ॥१॥ त्र्यंबकादिकमं

रु त्रं च तथा तत्र प्रयोजयेत्॥ यथा॥ ॐ अघोरे ह्रीं अघोरतरे ॐ ह्रौं ह्रां नमस्ते रुद्ररूपे हुं स्वाहा॥ अनेनाभिमंत्र्य
धारयेत्॥२॥ अथ मालाप्रकारो रुद्रयामले॥ त्रिंशद्भिः कृता माला धनदा जपकर्मणि॥ सप्तविंशतिसंख्या
११ तैरक्षैः पुष्टिप्रदा भवेत्॥१॥ पंचविंशतिसंख्यातैः कृता मुक्तिप्रदा भवेत्॥ अक्षैस्तु पंचदशभिरभिचारफल
प्रदा॥२॥ स्कांदेपि॥ अष्टोत्तरशतेनापि माला सर्वार्थसाधिका॥ रुद्राक्षमूलं तु ब्रह्मा तन्नालं विष्णुरुच्यते॥१॥
तन्मुखं रुद्र इत्याहुर्बिंदवः सर्वदेवताः॥ अक्षसूत्रस्य कर्तव्या गोपुच्छवलयाकृति॥२॥ वक्त्रं वक्त्रेण संयोज्य
पुच्छं पुच्छेन योजयेत्॥ मेरुमूर्द्ध्वमुखं कुर्यात्तदूर्ध्वं नागपाशकं॥३॥ प्रक्षाल्य गंधतोयेन पंचगव्येन चोपरि॥ ततः
शिवांभसा क्षाल्य मूलमंत्रं ततो न्यसेत्॥४॥ पश्चात्संपूजयेत्तां हि गंधपुष्पाक्षतादिभिः॥ मूलमंत्रं समुच्चार्य
शुद्धभूमौ निधाय च॥५॥ पूजयेन्मूलमंत्रेण तस्यां देवं सदाख्यया॥ रुद्राक्षमालैवं हि जपयोग्या ततो भवेत्॥६
॥ नाछ्व विद्धारयेदक्षमालां नस्यैव धारयेत्॥ अक्षमाला गुप्ता त्व्या जपकाले सुमेधसा॥७॥ परदृष्टिगता माला
निष्फला जपकर्मणि॥ जपकाले क्षमालां तु गुरोरपि न दर्शयेत्॥८॥ वर्ज्यानाह स्कांदे॥ कृमिदष्टं छिन्नभि ११
न्नं कंटकैर्हीनमेव च॥ व्रणयुक्तमवृत्तं च षट् रुद्राक्षाणि वर्जयेत्॥ अत्रेदं बोध्यं यानि वक्ष्यामि अमंत्रक रुद्रा

स्धारणनिषेधकानि॥ तानिमतिर्निंदाइतिन्यायेनसमंत्रकधारणेअत्युत्कर्षबोधनपराणिनतुअमंत्रक
धारणनिंदापराणीतिमंतव्यं॥ मंत्रानुपादानेनरुद्राक्षधारणेबहुसुवचनेषुफलातिशयदर्शनात्॥तथाच
॥देवीभागवतेएकादशस्कंधे॥ रुद्राक्षंकेवलंवापियत्रकुत्रमहामते॥ समंत्रकंवामंत्रेणरहितंभाववर्जितं॥१
॥ योवाकोवानरोभक्त्याधारयेल्लज्जयापिवा॥ सर्वपापविनिर्मुक्तःसम्यक्ज्ञानमवाप्नुयात्॥२॥ एतेनशिरःकर्णा
द्यंगनियमोपिव्याख्यातः॥ यत्रकुत्रेत्यभिधानात्॥ एवंकिंभिदष्टादिवर्जनविषयोपिव्याख्यातव्यः॥ भूमिस्थरु
द्राक्षखंडेमृतस्यश्वानस्योर्द्ध्वगतिरभूदितिपौराणिकोद्घोषात्॥३॥ ॥इतिश्रीमत्स्वामिसदानंदविरचिते
शैवस्कंधाकरेरुद्राक्षोत्कर्षनिरूपणंनामतृतीयःकिरणः॥३॥ ननुमहाभारते॥ जान्हवीतीरसंभूतांमृदंमूर्द्ध्नी
बिभर्तियः॥ बिभर्तिरूपंसोर्कस्यतमोनाशायकेवलं॥१॥ स्त्युक्तः॥ऊर्ध्वपुंड्रंमृदाशुभ्रंललाटेयस्यदृश्यते॥
सचंडालोपिशुद्धात्मापूज्यएवनसंशयइत्यादिवचनैर्मृदोर्ध्वपुंड्रमपिविधीयते॥ तत्कथंरुद्राक्षमात्रधा
रणमेवकर्तव्यतयाप्रतिपाद्यतइतिचेदित्थं॥ तत्रतावत्सतिरुद्राक्षतत्त्वाभावनिश्चयेऊर्ध्वपुंड्रादिकंमृदविषयं
॥ अश्वत्थमूर्ध्वपुंड्रादिललाटेऽत्रहयातुये॥ धारयिष्यंतिमोहेनयुगांतेसमुपस्थिते॥ इतिवासिष्ठलैंगेनवमाध्या

श्रु. ये॥ अश्रौतमिति विशेषणं निरस्तत्वेन तस्याश्रौतत्वात्॥ तर्हि श्रुतिषु विधानाभावादेकादशीव्रतस्यापि द्विजेतरविषयत्वमि
ति चेन्न॥ एकादश्यास्तावेप्यनुमितश्रुतेस्तत्र सद्भावात्॥ तर्ह्यनुमितश्रुतिसद्भावदूर्ध्वपुंड्रेप्यस्त्विति चेन्न॥ ए
१२ कादशीव्रतस्य कुत्राप्यनिषिद्धत्वादनुमितिश्रुतेः संभवात्॥ ऊर्ध्वपुंड्रस्य तु पुराणेषु बहुशो निषेधादनुमितश्रु
तिसद्भावस्य कल्पयितुमशक्यत्वात्॥ तथा हि पाराशरं॥ साकं न पुंड्रांतरं निराक्रियते॥ ऊर्ध्वपुंड्रं त्रिशूलं च व
र्तुलं चतुरस्रकं॥ अर्धचंद्रादिकं लिंगं वेदनिष्ठो न धारयेत्॥ जन्मना लब्धजातिस्तु वेदपंथानमाश्रितः॥ पुंड्रांत
रं भ्रमाद्वापि ललाटे नैव धारयेत्॥ तिर्यक्त्रिपुंड्रं संत्यज्य श्रौतं पुंड्रांतरं बुधाः॥ ललाटे धारयन्मर्त्यः पतत्येव
न संशयः॥ न दाहयेद्द्विजश्रेष्ठश्चंदनं तप्तचक्रकैः॥ अंकितो यः स्वदेहे तु तं राजा शीघ्रं प्रवासयेत्॥ अतीव पति
तानां हि अपवाद्यंकनं नृणां॥ विधाय तत्र शुद्धानामतः शुद्धं न धारयेत्॥२॥ अपवादसंबंध्यंकनमित्यर्थः॥
अध्यापने चाध्ययने श्रौतस्मार्तेषु कर्मसु॥ संभाषणे च संबंधे नाधिकारी बलांछितः॥३॥ ननु तप्तमुद्रादिधारणस्य श्रौ १२
तत्वात्तन्निंदा न संगच्छते॥ तथा हि॥ यो वै श्लोकमोले धर्मानानुतिष्ठतानो॥ मदर्कं ध्यते ग्निर्वै सहस्रारः सहस्रारो भेभिभेभिनाततत

तनूः॥सायुज्यंसलोकतामाप्नोतीति॥तथा॥चक्रंबिभर्त्तिवपुषाभितप्तंबलंदेवानाममृतस्यविष्णोः॥सएतिनाकंदुरितं
विधूय॥विशंतियद्यतयोवीतरागाः॥तथाचऋक्परिशिष्टे॥अतप्ततनूर्नतदामोअश्नुतेशृतासइद्वहंतस्तत्समास
ता॥इतिचेच्छृणु॥तत्रयोहवैइतिवचनं॥शतपथश्रुतिस्थमिति॥रामार्चनचंद्रिकाकारादिनिरुक्तं॥नचतच्छतपथब्रा
ह्मणेउपलभ्यते॥किंच॥नेहविधिःश्रूयते॥अपिच॥पतितादिविषयकमेव॥प्रागुदाहृतस्मृतिबलात्॥नचस्मृत्या
श्रुतेः॥संकोचोऽनुपपन्नइतिवाच्यं॥विशेषविषयिण्यास्मृत्यासामान्यश्रुतेः॥संकोचस्यसर्वसंमतत्वात्॥अन्य
थापतितस्याप्यग्निहोत्रप्रसंगात्॥कलावपिनरमेधाश्वमेधादेःप्रसंगाच्च॥तत्रयदिपतितानांकर्मानधिकारबोधक
स्मृत्यानरमेधाश्वमेधकावितिकलिनिषिद्धपरिगणनस्मृत्याच॥अग्निहोत्राश्वमेधादिश्रुतीनांसंकोचइतिब्रूषे॥तर्हि
प्रकृतेपितुल्यं॥एतेनचक्रंबिभर्तीत्यादिवचनमपिगतार्थं॥यदप्युक्तं॥ऋक्परिशिष्टमितितत्रनेदंपरिशिष्टं॥किंतुस
प्तमाष्टकेपठ्यते॥इतितावत्वैदिकेन्योगृह्याण॥किंचनास्यत्वदभिमतोर्थः॥संभवति॥इदंत्वदुपजीव्येमोक्षधर्मेरित्थं
व्याख्यातं॥पवित्रंतेविततंब्रह्मणस्पते॥प्रभुर्गात्राणिपर्येषिविश्वतः॥अतप्ततनूर्नेतिऋङ्मंत्रः॥ब्रह्मणःवेदस्यच
तुर्मुखस्यब्राह्मणजातेर्वापतेरक्षकेतिविष्णुसंबोधनं॥प्रभुस्त्वंविश्वतोविश्वस्यगात्राणिपर्येषि॥अंतर्यामितयाव्या

सु श्नोति॥ तादृशस्यैतस्य पवित्रं सुदर्शनं॥ अर्थाच्चूतेनेति लभ्यते॥ अतप्ततनूः असंस्कृतशरीरः आमः अदग्धपापस्तद्ब्रह्म
नाश्नुते॥ नचैतद्व्याख्यानमप्रामाणिकं॥ तस्मिन्नुदीचीनदशं नवपवित्रं वितन्वंति पवित्रं ते विततं ब्रह्मणस्पत इति वितन्य
१२ मानमभिमंत्रयते यजमानदृष्ट्यावस्त्रखंडेन उद्गातृभिर्द्रोणकलशे वितन्यमानस्य पवित्रस्यानुमंत्रणे एतन्मंत्रेणेत
न्मंत्रविनियोगात्॥ तथा च॥ हे ब्रह्मणस्पते सोम ते तुभ्यं त्वत्पावनार्थं॥ इदं दशापवित्रं विततं इत्यर्थो भाष्यसंमतः॥ अतएव
कृच्छ्रचान्द्रायणादिनाऽतप्ततनुरसंसाधितदेहः अतएव आमोऽपक्वोऽदग्धरागादिस्तद्ब्रह्म नाश्नुते नाप्नोतीत्यर्थः॥
अपि च॥ सोमस्य धाराः पवते इत्युपक्रमात्॥ शोधंतो॥ अस्य जंतवः ऽस्कसरदर्शनात्॥ पवमानसोमो देवतेत्यनुक्र
मणिकावचनात्॥ पूर्वोक्तापरस्य ब्रह्मत्वाच्चत्वदुक्तोऽर्थोऽसंगत एव॥ यदस्पृष्टं विष्णुचक्रेर्दये॥ नारायणायुधैर्युक्तं
कृत्वात्मानं कलौ युगे॥ कुरुते युग्मकर्माणि भस्मतुल्यान्यसंशयं इत्यादि ब्रह्मपुराणवचनानीति॥ तान्यपि समूल
त्वे पूर्ववदद्विजेतरविषयव्यवस्थापनेन गतार्थानि॥ उक्तं च ब्रह्मपुराणे दशमाध्याये॥ तप्तमुद्रां त्यजायद्धरि
णा निर्मिता पुरा॥ नृदेवस्तप्तमुद्रायाश्चिह्नं कृत्वा विमूढधीः॥ इह जन्मनि शूद्रः स्यात् प्रेत्य श्वा च भविष्यति॥ इति स्थि १२
तम्॥ नारदीये॥ संतप्तशंखचक्राद्यैर्लिंगैरंकितविग्रहं॥ पश्यतो नरकप्राप्तिर्जायते नात्र संशयः॥१॥ यस्तु संत

तच्छंखादिलिंगांकिततनुर्नरः ॥ स सर्वयातनाभोगी चांडालो जन्मकोटिषु ॥ २ ॥ द्विजं संतप्तशंखादिलिंगांकिततनुं नरः ॥ सं
भाष्य रौरवं याति यावदिंद्राश्चतुर्दश ॥ ३ ॥ चक्रांकिततनुर्यस्तु तत्र कोपि न संविशेत् ॥ यदि तिष्ठन्महापापी सहस्रब्रह्महा भवेत् ॥ ४ ॥ ग ग
स्नानरतो वापि श्मश्रूमेधरतो दिवा ॥ चक्रांकिततनुं दृष्ट्वा रौरवं गुणमश्नुते ॥ ५ ॥ लिंगांकिततनुं दृष्ट्वा पश्येत्सूर्यं नर
श्वर ॥ ६ ॥ हेमाद्रौ प्रायश्चित्तखंडे वायुपुराणे ॥ शूद्रो यदि मोहेन तापयेद्वह्निमुद्रया ॥ स कर्महीनो वेदत्र सर्वपाखं
डसंज्ञकः ॥ १ ॥ लिंगपुराणे ॥ शंखचक्रे तापयित्वा यस्य देहः प्रदह्यते ॥ स जीवन्कुणपस्त्याज्यः सर्वधर्मबहिष्कृतः ॥ आदित्य
पुराणे ॥ पूर्वजस्य तनुं दग्ध्वा शंखचक्रादिभिः पृथक् ॥ न तस्य निष्कृतिर्दृष्टा स्नानदानजपादिभिः ॥ २ ॥ पृथ्वीचंद्रोदयादिनि
बंधेषु विष्णुः ॥ शंखचक्राद्यंकनं च गीतनृत्यादिकं तथा ॥ एकजातेरयं धर्मो जातु स्याद्द्विजन्मनः ॥ २ ॥ इत्यादिशातातपहा
रीतवाक्यानि दृष्टानि ॥ सूतसंहितायामपि ॥ वेदमार्गैकनिष्ठस्तु मोहेनाप्यंकितो यदि ॥ पतत्येव न संदेहस्तथा पुंड्रांतरा
दपि ॥ १ ॥ नांकनं विग्रहे कुर्याद्वेदपंथानमाश्रितः ॥ नांकिताः स्वन संभाष्या नस्पृश्याश्च कदाचन ॥ २ ॥ न दर्शनीयास्ता
न्राजा देशात् क्षीप्रं प्रवासयेत् ॥ ३ ॥ अत्र तु ॥ नानादेशसमुत्पन्ना ब्राह्मणाः क्षत्रिया विशः ॥ चक्रांकिताः प्रवेष्टव्या यावदागम
नात्ममेति वचनमुदाहरंति ॥ तस्य विनापि वं समुच्चयस्य त्रिषु तेषामपि वक्ष्यत्वेन चक्रांकिता इत्यस्य पूर्वत्रितयवि ।

॥रु॰ शैवपणत्वाभावेपि समुच्चयसंभवेन रुद्राक्षादिविषयत्वमुचितमेव॥ किंच॥ तत्र च क्रमद्वयादूर्ध्वपदाभावादिदं राजकीय
चिह्नरूपं किंचित्स्यादिति भाति॥ तस्मादूर्ध्वपुंड्रमंकनं च सतिसमूलत्वे द्विजेतरविषयमेव॥ एवं रुद्राक्षातिरिक्तफल
१४ काष्ठादिमालाधारणमपि बोध्यम्॥ मुक्ताप्रवालादेर्धारणे त्वाचारांतु रुद्राक्षान्वितमेव विधेयात्॥ मामंतूरुक्षागिति
संक्षेपः॥ इति श्रीमत्स्वामिसदानंदविरचिते शैवकल्पधाकरे ऊर्ध्वपुंड्रादिखंडनं नाम चतुर्थः किरणः॥ ४॥ अथ शिव
लिङ्गपूजनमाहात्म्यं॥ विश्वेश्वरसंहितायां॥ बेरमात्रेतु सर्वत्र पूज्यंते देवतागणाः॥ लिंगे चैव हि सर्वत्र कथं संपूज्यते शि
वः॥१॥ इत्थं शौनकादिभिः पृष्ठे सूतउवाच॥ शिवो हि द्विविधः प्रोक्तो निष्कलः सकलस्तथा॥ निष्कलत्वान्निराका
रं लिंगं तस्य सुसंगतं॥२॥ सकलत्वात्तथा बेरं साकारं तस्य संगतं॥ अब्रह्मत्वाच्च जीवत्वात्तथान्ये देवतागणाः॥३॥ सर्वे सक
लमात्रत्वात्पूज्यंते बेरमात्रके॥ शिवस्योभयरूपत्वाल्लिंगे बेरे च पूज्यते॥ तु॥ बेरं प्रतिमा॥ तत्रैव शिवेनोक्तं॥ लिं
गे वरे च मे तुल्ये भजतां लिंगमुत्तमं॥ तस्माल्लिंगं परं पूज्यं बेरादपि मुमुक्षुभिः॥१॥ महाभारते द्रोणपर्वणि अश्व
त्थामानं प्रति व्यासेनोक्तं॥ देवदेवस्त्वमेयात्मा अजेयो विभुरव्ययः सर्वेरूपं भवं ज्ञात्वा लिंगे चैवयति तं प्रभुः॥१॥ १४
तत्रैव कृष्णार्जुनगौरवकथने॥ जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः॥ आभ्यां लिंगेर्चितो देवस्त्वया चार्यायां तु

गेस्थिते ॥ १ ॥ शिवरहस्ये ॥ इति मायां प्रयत्नेन कृतया सांगपूजया ॥ यत्फलं तत्फलं प्राप्यं व्यंगया लिंगपूजया ॥ १ ॥ श्रुति
माचांत्य यात्रा स्वसांगं शंकरपूजनं ॥ कर्तुं न शक्नुते यस्मात् लिंगपूज्यं प्रयत्नतः ॥ २ ॥ स्कांदे ॥ यो वा याममर्चयेद्भक्त्या पूर्णं
वर्षशतं नरः ॥ लिंगमेकदिनं पूज्यसममेतन्न संशयः ॥ २ ॥ तत्रैव ब्राह्मे लिंगं समभ्यर्च्य पुरुषार्थचतुष्टयं ॥ प्राप्नोत्यत्र पु
मान्स्येवानात्र कार्या विचारणा ॥ २ ॥ वायवे ॥ अयमेव परो धर्मस्त्विदमेव परं तपः ॥ इदमेव परं ज्ञानं शिवलिंगं यदर्च्यते ॥ १ ॥ ये
लिंगं सकृदप्यत्र पूजितं पार्वतीपतेः ॥ कुतो जन्मभयं तेषां संसारे दुःखसागरे ॥ २ ॥ सौरपुराणे विष्णुं प्रति शिववाक्यं ॥ लिं
गमांपूजय हरे लिंगरूपधरो ह्यहं ॥ १ ॥ वासिष्ठलैंगे ॥ अस्मात्तरसहस्रेषु यज्ञदानादिभिर्द्विजाः ॥ नराणां क्षीणपापानांत्र
ह्य लिंगार्चनेन भवेत् ॥ ३ ॥ यज्ञास्तपांसि दानानि तीर्थसेवा जपोत्सवं ॥ सर्वलिंगार्चनाद्दीनं फलाय न भवेद्द्विजाः ॥ ४ ॥ सर्वेषा
मेव धर्माणां महल्लिंगाराधनं वरं ॥ कीर्तितं शिवधर्मोत्र लिंगं कृत्वा तु जंतिये ॥ सैकतं मृन्मयं वापि तेन भवं स्येवन्नुजः ॥ ३ ॥ शि
वरहस्ये ॥ विना लिंगार्चनं यस्य कालो गच्छति नित्यशः ॥ महाहानिर्भवेत्तस्य दुर्वृत्तस्य दुरात्मनः ॥ १ ॥ एकतः सर्वदानानि
व्रतानि विविधानि च ॥ तीर्थानि नियमा यज्ञा लिंगार्चा चैकतः स्मृता ॥ २ ॥ कलौ लिंगार्चनं श्रेष्ठं यथा लोके प्रदृश्यते ॥ त
थानास्तीति नास्त्यत्र शास्त्राणामेष निर्णयः ॥ ३ ॥ काशीखंडे ॥ लिंगार्चनविधानज्ञो लिंगार्चनरतः सदा ॥ त्र्यक्ष एव स

विज्ञेयः साक्षाद्ब्रह्मा विमानवः ॥१॥ त्रिवर्षस्य गर्भधारणजः ऋणस्तस्मात्तु सफलः स्मृतः ॥ यद्गर्भान्निसृतः पुत्रो लिं
गार्चनरतो भवेत् ॥१॥ लिंगस्यार्चनमेवैकं कलौ सारतरं सुराः ॥ तदेव घोरसंसारमहासागरतारकं ॥ २ ॥ इंद्रनीलमयं लिं

गं विष्णुः पूजयते सदा ॥ ब्रह्मादिदेवैर्विष्णुरपि लिंगाराधनं नियमेनैव क्रियते ॥ किमुतान्येषां जीवानां ॥ तथा खलु रा
मेश्वरो ब्रह्मेश्वरो ॥ व्यासेश्वरो बिल्वकेश्वरो ॥ वसिष्ठेश्वरोऽगस्त्येश्वर इत्यादीनि लिंगानि पृथिव्यां तैस्तैर्महापुरुषैः प्रति
ष्ठितान्यर्चितानि च ॥ तत्तन्नामपूर्वाणि दृश्यंते ॥ तत्र हि बह्व्युपाख्यानानि वृत्तांताः श्रूयंते ॥ ततो लिंगाराधनमेव प्रति
नापेक्षया श्रेष्ठं इति सिद्धं ॥ लिंगाभावे तु प्रतिमायां शिवपूजनं कार्यं ॥ तदुक्तं विश्वेश्वरसंहितायां ॥ लिंगं प्राधान्यतः पू-
ज्यं तथा बेरं च गौणकं ॥ लिंगाभावे तु बेरं स्यात् पूजायां स्थापने मम इति ॥१॥ लिंगान्युक्तानि शैवागमे ॥ पद्मरागकाश्मी
रपुष्परागेंद्रनीलगोमेदविद्रुममौक्तिकराजतसौवर्णहारकूटपारदबाणजस्फाटिकरत्नानि पार्थिवमुत्तरोत्तरोत्तममिति ॥
वर्णादिभेदेन लिंगभेदमाह ॥ विश्वेश्वरसंहितायां ॥ रसलिंगं ब्राह्मणानां सर्वाभीष्टप्रदं भवेत् ॥ बाणलिंगं क्षत्रियाणां म
हाराज्यप्रदं शुभं ॥१॥ स्वर्णलिंगं तु वैश्यानां महाधनपतित्वदं ॥ शिलालिंगं तु शूद्राणां महाशुद्धिकरं शुभं ॥२॥ स्त्रीया 
भावे स्वदीयं तु पूजायां न निषिध्यते ॥ स्त्रीणां तु पार्थिवं लिंगं सभर्तृणां विशेषतः ॥ ३ ॥ विधवानां निवृत्तानां रसलिंगं वि

शिष्यते॥ विधवानां प्रवृत्तानां स्फाटिकं परिकीर्त्तितं॥४॥ बाणलिंगलक्षणमुक्तं सूतसंहितायां॥ नर्मदाजलमध्यस्थं
बाणलिंगमिति स्थितं॥ बाणासुरार्च्चितं लिंगं बाणलिंगं तदुच्यते॥१॥ तत्रापि॥ त्रिपंचवारं यस्यैव तुलासाम्यं न जायते
॥ तदा बाणं समाख्यातं शेषं पाषाणसंज्ञितं॥२॥ नद्यां वा शैलपृष्ठे वा यद्वा तद्वा पलभ्यते॥ बाणलिंगं तदाविस्थितं सर्वलिं-
गोत्तमोत्तमं॥३॥ स्फाटिकं त्रिविधं प्रोक्तं चंद्रसूर्याग्न्यात्मकं॥ भूतं रक्तं च पीतं च क्रमात्स्यात्तद्द्विजातिषु॥४॥ युग्यं लिंगन्
द्व्यवस्था युगांतरविषया लैंगे॥ कृते मणिमयं लिंगं त्रेतायां हेमसंभवं॥ द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युगे॥ सर्वव
र्णाश्रमाणां तु कलौ पार्थिवमर्हति॥ इति एवकारेण कलौ पार्थिवलिंगस्यैव सर्वसाधारण्येनोक्तत्वात्॥ लैंगे॥ रौद्रलिंग
महाविष्णुर्भस्मासुर इवं पार्थिवम्॥ चास्त्वित्रं समभ्यर्च्य लब्धवान्परमं पदं॥१॥ ब्रह्मा सर्वजगत्कर्त्ता मृल्लिंगे शंकरार्च
नात्॥ भारती मातृ वाणी तु तस्मात्पूज्यं महीमयं॥२॥ मृन्मयं लिंगमभ्यर्च्य ममस्ततः सकलाश्रपि॥ लब्धवंतः श्रियं पू
र्णां तस्मात्पूज्यं महीमयं॥३॥ यस्येंद्रियाणि पूजार्थं भवंति शुभदेहिनः॥ कदाचिदपि वा विप्र सफलं तस्य जीवितं॥
४॥ एककालं द्विकालं वा त्रिकालमथवा नरः॥ लिंगं महीजं संपूज्य शिवसायुज्यमाप्नुयात्॥५॥ शिवरहस्ये॥ शिव
लिंगसहस्राणां पूजया यत्फलं भवेत्॥ ततः शतगुणं पुण्यं लिंगे स्वादिसमुद्भवे॥१॥ ततः शतगुणं पुण्यं रत्नलिंगस्य

सु॰

६

पूजने॥ रत्नलिंगसहस्राणां पूजयायत्फलं भवेत्॥ २॥ ततः शतगुणं पुण्यं धातुलिंगस्य पूजने॥ धातुलिंगसहस्राणां पू-
जयायत्फलं लभेत्॥ ३॥ ततः शतगुणं पुण्यं बाणलिंगस्य पूजने॥ अनंतबाणलिंगानां पूजयायत्फलं लभेत्॥ ४॥ त-
तोनंतगुणं पुण्यं रसलिंगस्य पूजने॥ ततः शतगुणं पुण्यं मृत्तिकालिंगपूजने॥ ५॥ तस्मात्सर्वप्रयत्नेन लिंगं पूज्यं महीम-
यं॥ अकृत्वा पार्थिवं लिंगं योन्यदेवं प्रपूजयेत्॥ ६॥ वृथा भवति सा पूजा स्नानदानादिकं वृथा इति॥ सनत्कुमारसंहि-
तायां॥ यथा नदीषु सर्वासु गंगा श्रेष्ठा सरिद्वरा॥ तथा सर्वेषु लिंगेषु पार्थिवं श्रेष्ठमुच्यते॥ १॥ यथा सर्वेषु मंत्रेषु प्रण-
वो हि महान्स्मृतः॥ तथा सर्वेषु लिंगेषु पार्थिवो हि महान्स्मृतः॥ २॥ तथा॥ मृन्मयं लिंगमभ्यर्च्य पुरा लक्ष्मीः प्रयत्नतः
॥ जाता सौभाग्यसंपन्ना महादेवप्रसादतः॥ ३॥ लैंगे॥ जाबालोपनिषत्साक्षी परमज्ञानस्य सिद्धये॥ प्रधानसाधना-
न्याह॥ द्विजानामादरेण तु॥ १॥ अविमुक्तं परक्षेत्रं भस्मापरमं स्तुतं॥ शतरुद्रीयजाप्यं च तथा संन्यासमुत्तमं॥ २
॥ भस्मनोद्धूलनं चैव त्रिपुंड्रस्य च धारणं॥ रुद्राक्षधारणं साक्षात्तथा पार्थिवपूजनं॥ ३॥ भस्मसंपादनं ध्यानं म-
मैव परमस्य च॥ एतानि साधनान्याहुः प्रधानानि मम प्रिये॥ ४॥ इदं च शिवपूजनं नित्यं॥ तदुक्तं स्कांदे॥ किं वेदैः॥ किं-
ततः शास्त्रैः किं तपोभिरध्वरैः॥ शिवः संपूज्यतां नित्यमुपदेशोयमुत्तमः॥ १॥ शिवधर्मे॥ भक्त्यैवैकमना भू-

२६

त्वायावज्जीवं व्रतितस्तया॥ अर्चयेत महादेवमापन्नोपि सदा बुधः॥१॥ इत्यादौ नित्यं यावज्जीवं मदेति श्रवणात्॥ अकरणे प्रत्यवायश्रवणाच्च॥ तथा रु
द्ररहस्ये॥ शिवलिंगमनभ्यर्च्य यो भुंक्ते मोहसंगतः॥ स याति नरकं घोरं यावदाचंद्रतारकं॥१॥ पाद्ये॥ यो न पूज
यते लिंगं तु स्नानादीनां प्रकाशकं॥ वृथास्य वित सर्ववेत्तापि चतुर्वेदः पशुरुक्तः सः॥१॥ ईशानसंहितायां॥ यस्य नास्ति
गृहे नित्यं शिवलिंगार्चनं शिवे॥ तद्गृहं वंटिवंडालगृहमेव न संशयः॥१॥ ॐकारमाहात्म्ये॥ वरं वंध्या मारी वरम-
पि व्रणमेस्य पतनं वरं॥ मृत्युर्जातो तदनु दिवसे वा कथितप्रसूये॥ वरं छिन्नो जातो कटितिजननं चित्रो हिमरणेन तु श्रेयः
शैवेतरकुसुमसंदोहविहरणं॥१॥ तथा बृहज्जाबालोपनिषदि॥ अहरहः शिवलिंगमनभ्यर्च्य नाश्नीयाम॥ फल
मन्नमन्यद्वा॥ यद्यश्नीयाद्रेतोभक्षी भवेत नापः पिबेत् यदि पिबेत् सूत्रपो भवेत॥ प्रमादेनैकदा त्वनभ्यर्च्य भुक्त्वा नो
जयित्वा वाके श्रान्त्वा पयित्वा गव्यान्यपि पंचवसं कृत्वा जले रुद्रसूक्तानि वा जपेत॥ त्रिवारं शतरुद्रीयमादित्यं वा उप
न्तिष्ठायन्स्वकं कर्म ततो रौद्रैरेवमंत्रैर्भोजनं कुर्यात् ततो भोजयित्वा ब्राह्मणान्पूतो भवति अन्यथा पूरेसो यामना
नश्नुते॥१॥ जननाशौचे तथा शावाशौचे विशिवार्चनं न त्याज्यं॥ किंतु स्पर्शरहितं कार्यं॥ तदुक्तं स्कांदे॥ जनना-
शौचमध्येपि कर्तव्यं शिवपूजनं॥ शावाशौचेपि कर्तव्यं विनास्पर्शं प्रयत्नतः॥१॥ शांकरार्चनकाले तु द्विजो

श्री

नावो वदीयनाकं॥ अस्पर्शदोषमात्रार्थं स्नतकं तत्रयत्नतः॥२॥ रौद्रेण वरुणा कार्यो होमो रौद्रैः सहस्रकं
॥ ऊस्तवो जायते यस्मात्तस्मात्तु त्रिविधपूजनं॥३॥ कर्तव्यं मानसं नित्यं दशाहांतं प्रयत्नतः॥ दशाहे समतीते तु कृत्वा स्ना
१९ नं यथाविधि॥४॥ शिवलिंगार्चनं कार्यं द्विजश्रेष्ठैर्दिने दिने॥ होमाद्यं पुरुषाणां तु स्त्रीणां तु मकदावन॥५॥
इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे श्रीमल्लिंगपूजोत्कर्षवर्णनं नाम पंचमः किरणः॥५॥ ॥
यथालब्धोपचारैस्तु षोडशैः प्रयत्नतः॥ पूजयेत्सार्चितं लिंगं षोडशैश्च विधिना द्विजः॥१॥ षोडशैरित्यादेर्प्र
योगः॥ षोडशोपचाराश्च कालोत्तरे॥ आवाहनासनेपाद्यमर्घ्यमाचमनीयकं॥ स्नानं वस्त्रोपवीतं च गंधपुष्पे च धूप
कं॥ दीपमन्नं नमस्कारः प्रदक्षिणविसर्जने॥१॥ आवाहनं अभिव्यक्तानुसंधानं॥ विसर्जनं नाम निजरूपेण
वस्थानं॥ तदुक्तं कालोत्तरे॥ आवाहनमभिव्यक्तिर्निजस्थापो विसर्जनं॥ एवं दिने दिने देवं पूजयेदंबिकापतिं॥२॥
एतादृशावाहनविसर्जनयोर्बाणलिंगादावपि संभवात्॥ तत्र अभिप्रायावाहनविसर्जनयोरभावेपि न षोडशोपचा
रपूजनवैकल्यं॥ यद्वा॥ ध्यानं वस्त्रासनं पाद्यमर्घ्यमाचमनीयकं॥ स्नानं वस्त्रोपवीतं च भूषणानि तथैव च॥ १८
गंधं पुष्पं तथा धूपं दीपमन्ननिवेदनं॥ प्रदक्षिणनमस्कारौ स्तुतिश्चाराक्त षोडश॥ इति स्कांदोक्ताः॥ षोडशोप

तु.
१८

तायां॥ प्रदक्षिणास्त्रयस्कोऽपि यः स्नाने चिंतयेद्विभुं॥ गंगास्नानसमुपविष्टोऽपि पातकस्यापि क्षयं च क्षति॥ २॥ इति श्रीमत्स्वा...
नंदविरचिते श्रीवत्सधाकरे उपचारनिरूपणं नाम षष्ठः किरणः॥ ६॥ अथ जलानि स्कांदे॥ नद्याः समुद्रगामिन्याः नदाच्छ
स्वयमाहृतं॥ वस्त्रपूतं च शीतं च विचित्रं शिवपूजने॥ १॥ कांचीखंडे॥ वस्त्रपूते जले लिंगं स्नापयित्वा मनामराः॥ लभंते
मेधजं नित्यं पुण्यं प्राप्नोति मानवः॥ वर्ज्यानि चैव॥ शूद्रानीतं स्त्रियानीतं वामहस्ताहृतं तथा॥ अन्यपूजावशि-
ष्टं च जलं त्याज्यं शिवार्चने॥ १॥ वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलं॥ अवर्ज्यं जाह्नवीतोयं तुलसीपद्मबिल्वकं॥ २॥ सि-
द्धांतशेखरे॥ कलुषं कृमिसंमिश्रमोरं पल्वलोदकं॥ अल्पहृद्भूतलस्थं च शिलागर्तजलं च यत्॥ सदाच्छायायुतं त्या-
ज्यमंत्यजातिनिषेवितं॥ इत्यादिदोषसंयुक्तं ... तोयं शिवार्चने॥ २॥ जलसंग्रहणं कुर्याद्दिवा चोपसि नो निशि॥ ॥
इति श्रीमत्स्वामिसदानंदविरचिते श्रीवत्सधाकरे जलोत्कर्षवर्णनं नाम सप्तमः किरणः॥ ७॥ अथाभिषेकः सनत्-
कुमारसंहितायां॥ केवलेनोदकेनैव स्नापनं भवेत्सदा॥ गंधोदकं शतगुणं पंचगव्यं ततोऽधिकं॥ तस्माच्छतगुणं क्षीरं १८
सहस्रं कापिलं भवेत्॥ ततः शतगुणं प्रोक्तं सर्पिषा स्नानमेव च॥ २॥ कपिलासंभवेनैव सर्पिषा स्नापयेच्छुभं॥ क्षमा-
मि देवि तस्याहमपराधान्बहूनपि॥ ३॥ अभिषेकपात्राण्युक्तानि लैंगे॥ सुवर्णकलशेनाथ तथा वै राजतेन च॥

ताम्रेण कलशेनाथवा पालाशेन दोनेन वा ॥ शंखेन कुम्भयेनाथवा शोधितेन शृंगेण वा ॥ सकूर्चेन सपुष्पेण स्नापयेन्मंत्रपूर्व-
कमिति ॥ यस्तु वर्जयेल्लिंगपूजायां शंखतोयं विशेषतः ॥ अत्र तुल्यबलविरोधाद्विकल्पः ॥ ३ ॥ इत्यभिषेकः ॥ इति श्री-
मत्स्वामिसदानंदविरचिते शैवसुधाकरे अभिषेकोत्कर्षणं नाम अष्टमः किरणः ॥ ८ ॥ अथ गंधाः ॥ लिंगस्य लेपनं कु-
र्याद्दिव्यगंधैर्मनोरमैः ॥ वर्षकोटिशतं दिव्यं शिवलोके महीयते ॥ १ ॥ सौरपुराणे ॥ सुगंधलेपनात्पुण्यं द्विगुणं चंदनस्य वै ॥
चंदनाच्चागरोर्ज्ञेयं पुण्यमष्टगुणाधिकं ॥ १ ॥ कृष्णागरोर्विज्ञेयं द्विगुणं फलमिष्यते ॥ तस्माच्छतगुणं पुण्यं कुंकुमस्य म-
विधीयते ॥ २ ॥ स्कांदेपि ॥ चंदनागरुकर्पूरमृगनाभिघनकुंकुमैः ॥ लिंगमेतैः समालिप्य गाणपत्यमवाप्नुयात् ॥ ३ ॥ अ-
नुलेपनप्रमाणं लैंगे ॥ अनुलिंपेत्तु लिंगं तु पंचविंशपलेन वै ॥ ॥ इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे गं-
धोत्कर्षवर्णनं नाम नवमः किरणः ॥ ९ ॥ अथाक्षताः ॥ शिवरहस्ये ॥ अर्चयिष्यति यो नित्यमखंडैः शालितंदुलैः त-
त्र खंडैस्तु मिश्रं वा मिश्रितैर्देयं मयाद्यये ॥ १ ॥ यस्तु नित्यं निवेद्याक्षतैः पुष्पैः शिवं पूजयिष्यति ॥ तत्र खंडैस्तु मिश्रं वा मिश्रितैर्देयं म-
द्विये ॥ द्विगुणं तंडुलैर्नित्यं यो मामभ्यर्चयिष्यति ॥ तत्र खंडैर्न ॥ ३ ॥ इत्यक्षताः ॥ इति श्रीमत्स्वामिसदानंदविरचिते शैवसु-
धाकरे अक्षतोत्कर्षनिरूपणं नाम दशमः किरणः ॥ १० ॥ शिवपूजनं सति संभवे बिल्वपत्ररहितं न कार्यं ॥ तदुक्तमादि

श्री लपुराणे॥ गोमयादुत्थितः श्रीमान् बिल्ववृक्षः शिवप्रियः॥ तत्रास्ते बिल्ववृक्षाग्रे श्रीः श्रीवृक्षस्तेन चोच्यते॥१॥ बिल्वपत्रैर्वि
नापूजां यः करोति शिवस्य च॥ स याति नरकं घोरं यावदिंद्राश्चतुर्दश॥२॥ इदं च निंदावाक्यं॥ न हि निंदेति न्यायेन बिल्वप
१२९ त्रसहितशिवार्चनस्यात्युत्कृष्टत्वबोधकं॥ न तु तद्रहितपूजाया निषेधतात्पर्यवत्॥ पूर्वोदाहृतानेकवाक्यविरोधात्॥
ब्रह्मांडपुराणे॥ नित्यमार्द्रैरनाविद्धैर्बिल्वपत्रैः सदा शिवं॥ पूजयस्व महादेवं तस्मान्मा प्रमदो भव॥१॥ सौरपुराणे॥ एकं
बिल्वदलं रम्यं मल्लिंगे मार्पितं मयि॥ अनंताघहरं नूनं सत्यमेवोच्यते मया॥१॥ दर्शनाद्बिल्ववृक्षस्य स्पर्शनाद्वंदनादपि
॥ अहोरात्रकृतं पापं नश्यते नात्र संशयः॥२॥ ब्रह्मांडे॥ पंचाक्षरेण मंत्रेण बिल्वपत्रैः शिवार्चनं॥ करोति श्रद्धया य
स्तु स गच्छेदैश्वरं पदं॥१॥ बिल्वपत्रच्छेदने निषिद्धदिनान्याह॥ लैंगे॥ अमारिक्तासु संक्रांतावष्टम्यामिंदुवासरे॥
बिल्वपत्रं न च छिंद्याच्छिंद्याच्चेन्नरकं व्रजेत्॥१॥ नूतनालाभे तु शुष्कैः पर्युषितैरपि पूजनं कार्यं॥ तदुक्तं शिवरहस्ये
शुष्कैः पर्युषितैः पत्रैरपि बिल्वस्य नारद॥ पूजयेद्गिरिजानाथमलाभे यत्नतो नरः॥१॥ तथा॥ तुलस्या बिल्वपत्रे न तु
जेषु च सर्वशः॥ न पर्युषितदोषोऽस्ति मालाकारगृहे तथा॥२॥ सिद्धांतशेखरे॥ पर्युषिता न तुलसी मासमात्रं न दुष्यति॥ १२७
चत्वारिंशद्दिनं बिल्वं कमलं त्रिदिनं स्मृतं॥१॥ केतकीशतपत्रं च वत्सनं पंचविंशं स्थितं॥ पक्षमात्रं दमनकोऽवस्थितो

पिनदुष्यति॥ २॥ जातिपत्रैः फलैश्चापि तथा कुंकुमकेसरैः॥ सुगंधपुष्पैर्यत्नेन सदा पूज्यो महेश्वरः॥ ३॥ नैवं पर्युषितं त्वस्ति तं
संवत्सरावधि॥ ४॥ मालायाः पर्युषितत्वं नास्ति सदाह वसिष्ठः॥ अन्यत्र त्वेवं पर्युषितं वर्ज्यं श्राद्धकर्मणि॥ ग्रथितानि च पुष्पा
णि नैव पर्युषितानि हि॥ शुष्कपर्युषिताज्ञाने अर्पितान्यपि ग्राह्याणि॥ तदुक्तं स्कांदे॥ अर्पितान्यपि बिल्वानि प्रक्षाल्य च पु
नः पुनः॥ शंकरायार्पणीयानि न नवानि यदि क्वचित्॥ खंडितं बिल्वपत्रं च याह्यं शंताहृशं शिवे॥ प्रत्यहं नियमेनेति शाहु जीबा
लत्वा खिनः॥ इदं खखंडितत्वमेवेदितव्यम्॥ नारदीये॥ सर्वेभ्यश्चैव पत्रेभ्यो बिल्वपत्रं विशिष्यते॥ दिने दिने तु दातव्यं त्रोध्यि
त्वा पुनः पुनः॥ सप्तरात्रमतिक्रम्य निर्माल्यत्वं प्रपद्यते॥ पाद्मे॥ चूर्णीकृतान्यपि शाखा बिल्वपत्राणि वैदिकाः॥ संपाद्य पू
जयेत्वे शं नवाजाने विचक्षणाः॥ बिल्वपत्रमुपक्रम्य॥ स्कांदे॥ वामपत्रे स्थितो ब्रह्मा पद्मनाभश्च दक्षिणे॥ मध्यपत्रे स्थि
तो रुद्रः साक्षात्संसारमोचकः॥ १॥ ८४ नागे स्थिता यक्षा यक्षभक्तानां निषेधकाः॥ इंद्राद्यो लोकपालाश्च तत्राग्रे परिकीर्तिताः॥
२॥ पूर्वं नागेऽमृतं न्यस्तं सदेवैर्ब्रह्मादिभिः पुरा॥ अतो वै पूर्वभागेन पूजयेद्गिरिजापतिं॥ ३॥ तत्रैव॥ पुष्पमूर्ध्वमुखं योज्यं पत्रं
योज्यं त्वधोमुखं॥ फलं तु संमुखं योज्यं यथोत्पन्नं तथार्पयेत्॥ लैंगे॥ मणिमुक्ताप्रवालस्फटिकैरर्चनं कृतं॥ न गृह्णाति विना
देवि बिल्वपत्रैर्वरानने॥ बिल्वपत्रसंख्योक्ता॥ वायवीयसंहितायां॥ श्रीपत्रोत्पलपद्मानां संख्या साहस्रिकी मता॥ प्रत्येकम॥

पु. परासंख्या ज्ञातमष्टोत्तरं द्विज ॥ १ ॥ पुष्पांतरेण नियमो यथालाभं निवेदयेत् ॥ शिवरहस्ये ॥ धूपदीपोपहारादेरभावे पि द्विजोत्तम ॥ सां
गं बिल्वदलैरेव भविष्यति शिवार्चनं ॥ १ ॥ बिल्वपत्रार्थमन्यत्तु न वस्येव न सर्वथा ॥ शूद्रानीतैः क्रयक्रीतैर्बिल्वपत्रैर्न मार्चनं ॥
यः करोति स मूढात्मा रौरवं नरकं व्रजेत् ॥ २ ॥ तत्रैव ॥ बिल्वपत्रैर्महादेवं स्वाहृतैरेव कोमलैः ॥ यः पूजयति यत्नेन पदं प्राप्नोति शां
२० करं ॥ १ ॥ अथ पुष्पाणि ॥ आरण्यसंभवैः पत्रैः पुष्पैर्वा गिरिसंभवैः ॥ अपर्युषितनिश्छिद्रैररक्तैर्जंतुवर्जितैः ॥ १ ॥ आत्मारा
मोद्भवैरेव पुष्पैः संपूजयेच्छिवं ॥ अरक्तैरिति रक्तपुष्पनिषेधो रक्तोत्पलकर्णिकारव्यतिरिक्तविषयः ॥ रक्तोत्पलैः क
र्णिकारैर्यः करोति ममार्चनं ॥ स भाग्यवान्मनुष्येषु मम स्यात्प्रियकृत्तमः ॥ इति गारुडे तयोर्विधानात् ॥ द्विविधैः कर्णि
कारैश्च पूजयेन्मां वरानने ॥ इति नारदीयाच्च ॥ स्वाहृतैरेव पूजनं कार्यं ॥ तदुक्तं शिवरहस्ये ॥ स्वयमुत्पाद्य पुष्पाणि यः
स्वयं पूजयेच्छिवं ॥ तानि साक्षात्प्रगृह्णाति देवदेवो महेश्वरः ॥ १ ॥ उत्पाद्येत्यस्य आहृत्येत्यर्थः ॥ स्वारामसंभवं श्रेष्ठं मध्य
मं विपिनोद्भवं ॥ विक्रीतमधमं पुष्पपत्रं च शिवपूजने ॥ २ ॥ स्मृत्यंतरे पि ॥ समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत्
॥ शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः ॥ १ ॥ स्वयमाहरेदिति नियमो द्विजानामेव ॥ न तु शूद्राणां स्त्रीणां च ॥ श्रोत्रि
यपदोपादानात् ॥ छेदनं पत्रपुष्पाणां स्त्रीभिः शूद्रजनैस्तथा न कार्यं सर्वथा राजन्निति सा ह भगवान्मनुरिति निषेधात् ॥ एवं

च॥ धर्मार्जितधनक्रीतैः॥ पुष्पैः कुर्यात्सुरार्चनं॥ उद्धरिष्यत्यसंदेहं स तु पूर्वांस्तथापरान्॥ इति वचनमपि स्त्रीशूद्रपर
मेव॥ कूर्मपुराणे॥ गृहीत्वा नष्टानि पुष्पाणि देवार्चनविधौ द्विजैः॥ अन्यारामोद्भवान्येव भोगार्थेन कदाचन॥१॥ देवतार्थं द
जं पुष्पमस्तेयमनुरब्रुवीत्॥ याचितैः परपुष्पाद्यैर्यः करोति सुरार्चनं॥ वृथा भवति सा पूजा स्वपराधी भवेत्ततः॥२॥ द
त्तः॥ देवोपरि धृतं यच्च वामहस्तधृतं च यत्॥ अधोवस्त्रधृतं यच्च जलान्तःक्षालितं च यत्॥१॥ देवतास्तन्न गृह्णन्ति वड
ब्धनिर्माल्यतां व्रजेत्॥ समित्पुष्पकुशादीनि वर्हं तेन नाभिवादयेत्॥२॥ तद्धारीनेवमन्यान् हि निर्माल्यं तद्विवेतयोः॥ इ
ति॥ बिल्वापामार्गजातीतुलसिशमिशताकेतकीभृंगदूर्वा॥ मंदारांभोजदर्भामुनितगरतिलब्रह्मकल्हारमल्लीः॥
चंपासाराति कुंदा दमनमरुवका बिल्वतो हानि त्रिंशात्॥ त्रिंशाद्येकाशिराश्वपादधिनिधिवसुचतुर्न्यूयमाभूय एवं॥
१॥ अहानि त्रिंशात्॥ मल्लीः राश्वपादधीस्यत्रायेत्वमेव गतिः॥ अस्यार्थः॥ बिल्वतः बिल्वादारभ्य मरुवकान्तं चतुर्विंश
तेः॥ पत्रपुष्पाणि क्रमेणैतदुक्तसंख्याकान्यहानि तावद्दिवसपर्यंतं पर्युषितानि न भवंति॥ तदुत्तरं पर्युषितानि भवंति॥ यथा
बिल्वस्त्रिंशदहानि॥ ३०॥ न पर्युषितः॥ अपामार्गस्त्रिंशात्॥ ३०॥ जातीवीणि॥ ३॥ तुलसी एकं॥१॥ शमी अरिः॥ ६॥ श
तावरी रात्रिः॥१२॥ केतकी उदधिः॥ भृंगः भृंगराजः निधिः॥ ९॥ दूर्वा वसुः॥ ८॥ मंदारः नृः॥१॥ अंभोजं नृः॥१॥ दर्भाः

यमः॥२॥पुनरपिमुनिः आगस्तिः त्रिंशत्॥३०॥तगरः त्रिंशत्॥३०॥तिलः॥३॥ब्रह्मपलाशः॥१॥कल्हारः॥६॥मल्ली
॥१॥चंपा॥७॥अश्वारातीश्वेतः॥९॥कृष्णश्च॥८॥कुंभः॥१॥दमनकः॥मरुवकः॥२॥निर्णयसिन्धौ तु॥बिल्वापा
मार्गजातीतुलसिशमिशताकेतकीभृंगदूर्वामन्दारनीजाहिदनां मुनितिलतगरब्रह्मकल्हारमल्लीः॥चम्पाश्वारातिकु
म्भादमनमरुम्बकाबिल्वतोऽह्नानिशरतास्त्रिंशच्यकार्येरीशोदधीत्यादिः पाठः॥मन्दोमन्दारः॥अह्नीनागकेशरः॥कुम
नीपाटला॥द्रुशाएकादश॥उदधिश्चत्वार॥इति व्याख्यापितत्रैव॥स्कांदे॥संहृतैरन्यकुसुमैः पूजनीयो महेश्वरः॥हं
तहीनैः पूजनीयो बृहतीकुसुमैः शिवः॥१॥अलाभेतुसुपुष्पाणां पत्रादीनि समर्पयेत्॥पत्रादीनामलाभेतु नमस्कारः प्रशस्यते॥पु
ष्प पत्रयभाजायाद्विगुणं पुण्यं॥तदुक्तं लैंगे॥प्रत्येकमुक्तपुष्पेण दत्तासो वर्णिकं फलं॥सम्भिश्च नृपशार्दूलतद्बद्धि
गुणं भवेत्॥२॥नारदीये॥यस्यवृक्षस्य पत्राणि पुष्पाणि च फलानि च॥महादेवोपयुक्तानि सोपियाति परांगतिं॥१॥
सिद्धांतशेखरे॥शैवागमे तु सर्वत्र प्रशस्तं करवीरकं॥तस्य मध्ये स्थितो देवो लिंगाकारः सपीठकः॥१॥अर्पितं त
न्न निर्माल्यं पुनः शेस्य शिवं यजेत्॥करवीरसहस्रेभ्यः शमीपुष्पं विशिष्यते॥२॥शमीपुष्पसहस्रेभ्यो ह्येकं धत्तूरकं
वरं॥धत्तूरकसहस्रेभ्यो बृहत्पुष्पं विशिष्यते॥३॥बृहत्पुष्पसहस्रेभ्यो ह्यपामार्गो विशिष्यते॥पुष्पप्रकरणेपि॥पुष्प

स्यसकंटकत्वादपामार्गस्य पत्रं प्रशस्यं॥४॥ अपामार्गसहस्रेभ्यः श्रीमन्नीलोत्पलं वरं॥ नीलोत्पलसहस्रेण यो मालां
संप्रयच्छति॥ शिवाय विधिवद्भक्त्या तस्य पुण्यफलं शृणु॥ कल्पकोटिसहस्राणि कल्पकोटिशतानि च॥६॥ वसे
च्छिवपुरे श्रीमान् शिववत्तुल्यपराक्रमः॥ बृहतीकुसुमैर्नेत्र्यायो लिंगं सकृदर्चयेत्॥७॥ गवामयुतदानस्य फलं प्राप्य
शिवं व्रजेत्॥ मल्लिकोत्पलपुष्पाणि नागपुन्नागचंपकं॥८॥ अशोकश्वेतमंदारकर्णिकारबकानि च॥ करवीरार्कमंदार
शमीतगरकेसरं॥९॥ कुशापामार्गकुमुदकदंबबकुलान्यपि॥ पुष्पैरेतैर्यथालाभं पूजयेच्च सदाशिवं॥ करवीरसमा ज्ञे
या जाती विजया पाटली॥ श्वेतमंदारकुसुमं सितपद्मेन वत्समम्॥१०॥ नागचंपकपुन्नागा धत्तूरकुसुमैः समाः॥ अथ वर्ज्या
नि सौरपुराणे॥ केशकीटापविद्धानि शीर्णपर्युषितानि च॥ स्वयंपतितपुष्पाणि त्यजेदुपहतानि च॥१॥ उग्रगंधानि पु
ष्पाणि म्लानितानि विवर्जयेत्॥ एरंडपत्रैश्च तथा वासोभिः कुत्सितात्मभिः॥२॥ आनीतं नार्पयेच्छंभोः प्रमादाद्यदि दो
षकृत्॥ कार्तिके सोमवारे विशेषतो धत्तूरपुष्पेण पूजा कार्या॥ तदुक्तं शिवरहस्ये॥ एकं वापि तु धत्तूरं कार्तिके सोम
वासरे॥ यदि दद्यात्मम प्रीत्या मयि लीनो भविष्यति॥१॥ पुष्पसमर्पणप्रकारश्चोक्तः प्रयोगपारिजाते॥ मध्यमानाम
मिकामध्ये पुष्पं संगृह्य पूजयेत्॥ अंगुष्ठतर्जनीभ्यां निर्माल्यमपनोदयेत्॥१॥ नारदीये॥ तुलसीदलमात्रेण यः

करोतिशिवार्चनं॥कुलैकविंशमुद्धृत्यशिवलोकेमहीयते॥२॥वन्यपुष्पाणांप्राशस्त्यमुक्तं॥पाद्मे॥शिवगीतायां॥वन्ये
पुष्पादृशीप्रीतिर्वर्त्ततेपरमेशितुः॥उत्तमेष्वपिनास्त्येवग्राम्यजेष्वपितादृशी॥२॥इतिश्रीशैवसुधाकरेबिल्वादिपत्रपुष्पो
त्कर्षनिरूपणं॰कादशःकिरणः॥११॥अथधूपः॥वायवीयसंहितायां॥चंदनागरुकर्पूरकुष्ठगुग्गुलचूर्णकैः॥घृते



नमधुनाचैवसिद्धोधूपःप्रशस्यते॥१॥सौरपुराणे॥गुग्गुलंघृतसंयुक्तंसाक्षाद्ह्लातिशंकरः॥गोमूत्राद्गुग्गुलुर्जातः
सुगंधिःप्रियदर्शनः॥१॥सधूपःसर्वदेवानांशिवस्यचविशेषतः॥लैंगे॥कृष्णागरुंसकर्पूरंधूपंदद्याच्छिवायवै॥नैरं
तर्येणमासार्द्धंतस्यपुण्यमनंतकं॥१॥इतिश्रीमत्स्वामिसदानंदविरचितेशैवसुधाकरेधूपोत्कर्षवर्णनंनामद्वाद-
शःकिरणः॥१२॥अथदीपः॥वायवीसंहितायां॥कपिलासंभवेनैवघृतेनातिसुगंधिना॥नित्यंप्रदीपितादीपाः
शस्ताःशंकरपूजने॥१॥शस्ताइत्यनेनकपिलाघृतासंभवेकपिलाव्यतिरिक्तानांगवांघृतेनापिदीपाःकार्याइतिबोधि
तं॥भविष्ये॥घृतदीपप्रदानेनशिवायशतयोजनं॥विमानंलभतेदिव्यंसूर्यकोटिसमप्रभं॥१॥घृताऽसंभवेतु॥तिलतै
लेनवाकार्योदरिद्रेणविपश्चिताइति॥अतसीतैलेनापिकार्यस्तदुक्तं॥नागरखंडे॥अतसीतैलयुक्तायेदीपादत्ताः २२
॥शिवालये॥दशपूर्वैर्दशापरैस्तेसमेताःशिवालये॥१॥वसंतीतिशेषः॥शिवालयेकैलासे॥कौसंभवते

लेनापि दीपः कार्य्यस्तदुक्तं ॥ स्कांदे ॥ कुंकुमस्थवर्तितैलेन दीपा दत्ताः शिवालये ॥ सानिनस्ते न विध्यंति दीपदानफलेन
हि ॥ १ ॥ कार्त्तिक्यां शिवाग्रे दीपदानमतिप्रशस्तं ॥ तदुक्तं तत्रैव ये दीपमालां कुर्वंति कार्त्तिक्यां श्रद्धयान्विताः ॥ याव
त्कालं प्रज्वलंति दीपास्ते लिंगमग्रतः ॥ १ ॥ तावद्युगसहस्राणि दाता स्वर्गे महीयते ॥ अत्र कालशब्दस्य क्षणादिपरत्वेन
योजनीयः ॥ लिंगमिति षष्ठ्यर्थे द्वितीया ॥ इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे दीपोत्कर्षवर्णनं नाम त्रयोदशः
किरणः ॥ १३ ॥ अथ नैवेद्यं ॥ सौरपुराणे ॥ शालितंदुलप्रस्थेन कुर्यादन्नं सुसंस्कृतं ॥ नानाव्यंजनसंयुक्तं शिवलोके महीं
यते ॥ १ ॥ गुडखंडघृतानां च भक्ष्याणां च निवेदनात् ॥ घृतेन पाचितानां च दशशतगुणं भवेत् ॥ २ ॥ शिवधर्मोत्तरे ॥ स
दा शिवस्य नैवेद्यं यावत्सिक्थानि संख्यया ॥ तावद्वर्षसहस्राणि दाता शिवपुरे वसेत् ॥ ३ ॥ घृतस्य पयुतैः सिक्थैः पुण्यं श
तगुणोत्तरं ॥ उपदंशयुतैर्ज्ञेयं पुण्यं दशगुणोत्तरं ॥ ५ ॥ फलं चित्रान्ननैवेद्यैर्विज्ञेयमयुताधिकं ॥ स्कांदे ॥ यावंतस्तंदुला
स्तस्मिन्नैवेद्ये संति संख्यया ॥ तावद्वर्षसहस्राणि शिवलोके महीयते ॥ १ ॥ दृष्ट्वा दिने दिने स्वन्नं पुरुषाहारसंमितं ॥ इदमना
द्यविषयकं ॥ आद्यस्तु प्रत्यहं महानैवेद्यं कुर्यात् ॥ महानैवेद्यलक्षणमुक्तं विद्येश्वरसंहितायां ॥ शालितंदुलखारेण मारि
चवस्यकेन च ॥ यवैश्च द्वादशप्रस्थैर्मध्याज्यकुडवेन च ॥ १ ॥ द्रोणमानेन मुद्गान्नं द्वादशव्यंजनान्वितं ॥ घृतपक्वैस्सूपैश्च

शै॰सु॰ मोदकैर्मल्लिकादिभिः ॥ २ ॥ द्वादशैश्चदधिक्षीरद्वादशावस्थकेनच ॥ द्वादशैरितिद्वादशभिरित्यर्थः ॥ इदंचर्वणवासिनालि
केरफलादीनिसहस्रशतसंख्ययासहस्रंवाशतंवाइतिसहस्रशतंइतिबहुव्रीहिः ॥ इयंसंख्याफलसमुदायापेक्षया ॥ नतु
२३ प्रत्येकापेक्षया ॥ द्वादशक्रमुकैर्युक्तंषड्विंशत्यत्रकैर्युतं ॥ कर्पूरखदिरचूर्णेनपंचसौगंधिकैर्युतं ॥ तांबूलमेवंकथितंमहा
नैवेद्यलक्षणं ॥ इतिश्रीमत्स्वामिसदानंदविरचितेशैवसुधाकरेनैवेद्योत्कर्षवर्णनंनामचतुर्दशः किरणः ॥ १४ ॥ ॥
अथतांबूलं ॥ काशीखंडे ॥ मुखवासंतुयोदद्याद्दत्वानैवेद्यमुत्तमं ॥ संख्यासमुद्ररत्नानांकथंचित्कर्तुमिष्यते ॥ १
॥ मुखवासादिदानस्यकः संख्यामत्रकारयेत ॥ मुखवासंतांबूलमित्यर्थः ॥ इतिश्रीमत्स्वामिसदानंदविरचितेशै
वसुधाकरेतांबूलोत्कर्षवर्णनंनामपंचदशः किरणः ॥ १५ ॥ अथप्रदक्षिणा ॥ सनत्कुमारसंहितायां ॥ प्रदक्षिणा
नमस्कारौसर्वाभीष्टप्रदावुभौ ॥ पूजांतेचसदाकार्यौभोगमोक्षार्थिभिर्नरैः ॥ १ ॥ बृहन्नारदीये ॥ शिवंप्रदक्षिणीकृत्यस-
व्यासव्यविधानतः ॥ यत्फलंसमवाप्नोतितन्मेनिगदतःशृणु ॥ १ ॥ राजन्प्रदक्षिणैकेनमुच्यतेब्रह्महत्यया ॥ द्विती
येनाधिकारित्वंतृतीयेनेंद्रसंपदं ॥ प्राप्नोतीतिशेषः ॥ कूर्मपुराणे ॥ प्रदक्षिणंद्विजः कुर्यात्पंचब्रह्माणिवैजपन् ॥ पंच २३
ब्रह्माणिसद्योजातादिपंचमंत्राः ॥ १ ॥ प्रदक्षिणसंख्यामाह ॥ शिवरहस्ये ॥ शिवप्रदक्षिणंकुर्यात्स्वयमष्टोत्तरंशतं ॥

सहस्रमयुतं लक्षं कोटिमन्येन कारयेत् ॥१॥ प्रदक्षिणात्रयं कुर्यात्तथा पंचदशाथवा ॥ अष्टौ द्वादश वा का
र्यास्त्वधिका अपि शक्तितः ॥१॥ इति कालभेदात्संख्याभेदमाह ॥ शिवरहस्ये ॥ प्रातः शिवार्चने देवि दश कार्याः
प्रदक्षिणाः ॥ मध्याह्ने द्वादश तथा एकादश सायाह्नि सादरं ॥१॥ प्रदक्षिणाप्रकारः ॥ स्कांदे ॥ वृषभांतरितो भूत्वा पीठको
तरमेव च ॥ प्रदक्षिणां न कुर्वीत कुर्वन्विपदमश्नुते ॥ पाद्मे ॥ अपसव्यं यतीनां तु सव्यं तु ब्रह्मचारिणः ॥ सव्यासव्यं गृह
स्थस्य शंभोः प्रोक्तं प्रदक्षिणं ॥२॥ सव्यासव्यस्वरूपं तु ॥ स्थाने वृषस्य संकल्प्य वृषभादौ प्रदक्षिणं ॥ सव्यासव्यं विजानी
यादपसव्यपसव्यकं ॥ वृषे चंडे दृषच्चैव सोमसूत्रे पुनर्वृषे ॥ इति बृहन्नारदीये उक्तं ॥ चंडस्थानमैशानी दिक् नव प्रदक्षि
णापेतं यः कुर्यात्तु प्रदक्षिणं ॥ त्रिंशत्सहस्रसंख्याकप्रदक्षिणफलं लभेदित्यपि ॥ तत्रैवास्याप्येवं नव प्रदक्षिणास्समुक्तं
॥ गृहस्थानामपि ज्योतिर्लिंगादिषु सव्यासव्यनियमो नास्ति ॥ तदुक्तं सूतसंहितायां ॥ ज्योतिर्लिंगे रत्नलिंगे ॥ स्वयंभुवि त
थैव च ॥ वृषचंडादिनियमः स्फरेश्वर न विद्यते ॥ लिंगपुराणे ॥ सर्वदिक्षु महाभाग विभोः कुर्यात्प्रदक्षिणं ॥ सोमसूत्रा
दिनियमो नास्ति विश्वेश्वरालये ॥ सोमसूत्रोल्लंघने दोषो नास्तीति भावः ॥१॥ विभोर्विश्वेश्वरस्य आदिपुराणे ॥ पश्चिमा
भिमुखं लिंगं लिंगं दिग्विवर्जितं ॥ गिरिलिंगं स्थललिंगं जललिंगं तथैव च ॥ लिंगेष्वेतेषु सर्वेषु कुर्यात्पूर्णप्रदक्षिणं ॥

श्री·सु पश्चिमाभिमुखं विश्वेश्वरादि॥ गिरिलिंगं त्र्यंबकादि॥ स्थललिंगं काश्यपादि॥ जललिंगं वरुणेश्वरादि॥ एतेषु पि
प्रदोषकाले सव्यापसव्यप्रकारेणैव प्रदक्षिणा कार्या॥ अत एव॥ सनत्कुमारसंहितायां॥ सव्यापसव्यप्रकारेणैव व्या
सेन अष्टम्यां प्रदोषे विश्वेश्वरे॥ प्रदक्षिणा कृता इत्युक्तं॥ लिंगांतरे तु॥ सति सामर्थ्ये गृहस्थेन सर्वदा सव्यापसव्यप्रका
२४ रेणैव प्रदक्षिणा कर्तव्या॥ असति तु कालांतरे सव्यापसव्यप्रकारवर्जने पि प्रदोषे॥ अवश्यं सव्यापसव्यप्रकारेणैव प्र
दक्षिणा कर्तव्या॥ तदुक्तं शिवरहस्ये॥ शाक्तैस्तु सर्वदा कार्यं सव्यासव्यप्रदक्षिणं॥ इदं कार्यं प्रदोषेषु शक्तिहीनैरपि द्वि
जैः॥१॥ अशक्तानां कालांतरे सोमसूत्रलंघनेन दोष इति भावः॥ प्रदक्षिणानियमो भविष्ये॥ आसन्नप्रसवा नारी ज
लपूर्णं घटं यथा॥ उद्वहंती शनैर्याति तथा कुर्यात्प्रदक्षिणं॥ पदे पदांतरं गत्वा करौ चलनवर्जितौ॥ वाचा स्तोत्रं हृदि ध्या
नं चतुरंगं प्रदक्षिणं॥२॥ नारदीये॥ शिवप्रदक्षिणायां तु मौनं कार्यं प्रयत्नतः॥ कृतांजलिपुटैरेव शिवस्मरणपूर्वकं
॥३॥ बृहन्नारदीये॥ शिवं प्रदक्षिणीकुर्वन् सोमसूत्रं न लंघयेत॥ लंघिते त्वेकमेव स्यादनुच्छिन्ने ऽयुतत्रयम्॥ सोमसूत्र
मानमुक्तं॥ सिद्धांतशेखरे॥ प्रासादविस्तारसमानसूत्रं सोमस्य सूत्रं दिशि सोमसूत्रं॥ सूत्राद्बहिर्लंघनतो न दोषः सदो २४
षमभ्यंतरलंघने तु॥१॥ अस्यार्थो लिंगार्चने चंडिकोदिसंमतः॥ प्रासादशब्देन प्रासादांतर्गतो लिंगादिस्तंतरालादि

शो गृह्यते॥ तद्विस्तारेण समानसूत्रं यत भित्तेर्बहिः॥ सोमस्य दिशि उत्तरदिशि सूत्रं तत्सोमसूत्रं॥ तावन्मात्रमुल्लंघने दो
षः यागजकमित्यर्थः॥ सूत्राद्बहिः सकृत्परिमाणं सोमसूत्राद्बहिर्न दोषः॥ ततोऽग्रे प्रणालिकालंघनेपि न दोषः॥ किंतु॥
एकमेवैकं स्यादिति भावः सर्वथा तल्लंघने तु अयुतत्रयं प्रदक्षिणाफलं स्यात्॥ यथाक्रमव्याख्यानेतु एकमेव स्याद्वि
ति बृहन्नारदीयोक्तं न संगच्छेत॥ तत्र घनस्य निबिडत्वात्काष्ठलोष्ठादिभिराच्छिन्नायाः॥ उक्तपरिमाणसोमसूत्रांतर्गता
या अपि प्रणालिकायाः भित्तेर्बहिर्लंघने तु न दोषः॥ तदुक्तं स्मृतसंहितायां काष्ठलोष्ठादिभिश्छन्ने लंघनेनेव दुष्यति॥ सो
मसूत्रमनुल्लंघ्य गर्भे कार्या प्रदक्षिणा॥१॥ तृणैर्यदि नवेष्टं नैनो वेसत्र न सर्वथा॥ सोमसूत्रमनुल्लंघ्य गर्भे सत्सवनेपि च
॥२॥ विहितं वाप्यविहितं सोमसूत्रं न लंघयेत्॥ बहिश्चाविहितं सूत्रमुल्लंघ्याशांतियातनां॥३॥ अविहितमिति नत्स
मासः॥ बृहन्नारदीये॥ प्रदक्षिणात्रयं कृत्वा नमस्कारैश्च पंचभिः॥ पुनः प्रदक्षिणं कृत्वा शिवलोके महीयते॥१॥ एक
हस्तनमस्कारादेकस्माच्च प्रदक्षिणात्॥ अंधकारं नमस्कारादत्र पुण्यं विनश्यति॥ ॥इति श्रीमत्स्वामिसदानंदविर
चिते शैवसुधाकरे प्रदक्षिणोक्तिवर्णनं नाम षोडशः किरणः॥१६॥ अथ नमस्कारः॥ ब्रह्मवैवर्ते॥ पृथिव्यां महादेवलिं
गरूपिणमव्ययं॥ प्रदक्षिणात्रयं कृत्वा प्रणमेद्दंडवच्च॥१॥ लैंगे॥ साष्टांगो दंडवन्मोभक्तिस्त्र र्वकं॥ कर्तव्यः श्रीमहे

त्रै·सु

श्रायदेवदेवायसर्वदा॥२॥शिवधर्मोत्तरे॥ये कुर्वंतिनमस्कारमीश्वरायक्वचित्क्वचित॥ पंपकोत्कौतुकाद्वापि भासे वि
मानैः प्रयांति च॥१॥काशीखंडे॥लिंगंसमर्चितंदृष्ट्वायःकुर्यात्प्रणतिंसकृत॥संदेहोजायतेतस्यपुनर्देहनिबंधने॥त
थाव्यासाः॥एवंविधेकलियुगेदोषाणामेकशोधनं॥महादेवनमस्कारोध्यानंदानमितिश्रुतिः॥१॥शिवरहस्ये॥अष्टांग
२५ सहिताःकार्याः॥प्रणामाःपार्वतीपतेः॥अष्टांगान्युक्तानि॥कूर्मपुराणे॥जानुबाहुशिरश्चक्षुर्गंडांतांगाष्टकंयदि॥दंडवत्प्र
णतास्तत्कंसदष्टांगनतिर्भवेत॥वक्रईक्षितःसाष्टांगनमस्काराकरणेप्रत्यवायोप्युक्तस्तत्रैव॥यःसाष्टांगंमहादेवंननमेत्सावधान
तः॥सदष्टांगइतिज्ञेयःसत्यंसत्यंनसंशयः॥१॥लैंगे॥शिवस्याग्रेनमस्कारःशिवदेवइतिस्मृतः॥सपुण्यनाशकस्तस्मात्सा
क्तरोपापकृद्भवेत॥१॥पतित्वादंडवद्भूमावुत्थायोत्थायअनृशिशाःप्रणामास्तुप्रकर्तव्याःशंकरायमहात्मने॥२॥स्कां
दे॥उत्थायोत्थायसाष्टांगान्प्रणामान्विंशदुत्तरान॥यःकरिष्यतिअस्त्रेमसपापेभ्योविमुच्यते॥१॥कौर्मे॥सदाशिवं
नमस्कुर्यान्मंत्रेणाष्टोत्तरंशतं॥शिवरहस्ये॥एकविंशतिःकर्तव्याःप्रणामाःपार्वतीपतेः॥एकादशाथवाष्टौवानातो
न्यूनाःकदाचन॥१॥अन्यत्र॥नमस्कारत्रयंकुर्यात्महादेवस्यमध्यानरः॥१॥तत्रत्यत्रास्तिविषयं॥यत्तुसिद्धांतशेखरे॥दंडव २५
त्प्रणामश्चाद्यःस्यात्प्रणामोथनमस्कृतिः॥अष्टांगैरथपंचांगैस्त्रिभिरंगैस्त्रिधामतः॥१॥शिरमाहस्तयुग्मनकर्णाभ्यां

चुबुकेन च ॥ बाहुभ्यां तु वृषश्चांगैः संस्पृश्य प्रणमेच्छिवं ॥ २ ॥ शिरहस्तैश्च जानुभ्यां पंचांगैः प्रणमेच्छिवं ॥ शि
रसा हस्तयुग्मेन त्रिभिरंगैर्नमेच्छिवं ॥ ३ ॥ यथोचितं नमेदेतैर्देशकालाद्यपेक्षयाऽन्ति ॥ तदपि साष्टांगकारणसमर्थो विध
ये ॥ देशकालाद्यपेक्षयेति तत्रैवोक्तत्वात् ॥ ब्रह्मवैवर्ते ॥ अग्रे पृष्ठे वामभागे समीपे गर्भमंदिरे ॥ जपहोमनमस्कारान्न कु
र्याद्देवतालये ॥ १ ॥ अग्रे मृत्युमवाप्नोति पृष्ठे त्वपचयः स्मृतः ॥ वामभागे नबन्नाशो दक्षिणे सर्वकामदः ॥ २ ॥ अत्र दक्षिण
भागो देवस्य ॥ न स्वात्मनः ॥ तदुक्तं ज्ञानरत्नमालायां ॥ देवस्य दक्षिणे भागे नमस्कारं प्रकल्पयेत् ॥ इति विश्वेश्वरस्य पश्चिमा
भिमुखत्वेन मुक्तिमंडपस्य वामभागत्वेपि विश्वेश्वरवचनात् ॥ तत्रैव प्रणामादिकं कार्यं ॥ तदुक्तं काशीखंडे ॥ देवस्य दक्षिणे भागे
स्थित्वा निर्वाणमंडपे ॥ नमस्कारत्रयं कृत्वा सर्वपापैः प्रमुच्यते ॥ १ ॥ इति दक्षिणे भागे दक्षिणस्यां दिशि इत्यर्थः ॥ इति न वि
रोधः ॥ बृहस्पत्यग्निसत्कृत्स्वामनिर्वाणमंडपे ॥ इति च ॥ केचित्तु ॥ पश्चात् पशुपतेरग्रे दंडवद्व्यतिमस्याहि ॥ पतंति पातकाः
सर्वे नातिष्ठंति कदाचन ॥ इति विशेषविधानात् शंभोरग्र एव नमस्कारः कार्यः इत्याह ॥ ॥ इति श्रीमत्स्वामिसदानंदवि
रचिते शैवसुधाकरे नमस्कारात्मकषष्ठवर्णनं नाम सप्तदशः किरणः ॥ १७ ॥ सूतसंहितायां शिवपूजायां दिङ्नियमाधिक
मुक्तं ॥ स्नात्वा शुद्धासने देशे गोमयेनोपलेपिते ॥ समासीनः सदा मौनी निश्चलो दङ्मुखः शुचिः ॥ १ ॥ बृहस्पतिः ॥ कालज

शै॰सु॰ निवेदनं दिग्भेदमाह ॥ शिवार्चनं सदा कार्यं भुक्तिमुक्तिप्रदं नृभिः ॥ प्राक्पश्चिमोदगास्येस्तु प्रातःसायंनिशासु च इति ॥ ॥
॥ इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे दिङ्नियमनिरूपणं नाम अष्टादशः किरणः ॥ १८ ॥ अथ नैवेद्यभ
क्षणनिर्णयः ॥ जाबालोपनिषदि ॥ रुद्रभुक्तं भुंजीत ॥ रुद्रपीतं पिबेत ॥ रुद्राघ्रातं जिघ्रेद्रुद्रेणात्तमश्नंति रुद्रेणपीतं पिबंति
२६ ॥ रुद्राघ्रातं जिघ्रंति ॥ तस्माद्ब्राह्मणाः प्रशांतमनसो निर्माल्यमेव भक्षयंति ॥ अत्र शिवनिर्माल्यतदितरभोजनस्य रागतः ॥ प्रा
प्तत्वात् भुंजीतेत्यादिः परिसंख्याविधिः ॥ पंचनखभक्षणादिविधिवत् ॥ एतदेव शिवनिर्माल्यमेव भक्षयंतीत्येवकारेण
दृढीकृतं ॥ ब्राह्मणा इति ॥ क्षत्रियादेरप्युपलक्षणं ॥ ब्राह्मणपदस्य ॥ अर्थवादस्थत्वेनोपसंहारस्थत्वेन च उपक्रमस्थ
विधिसंकोचकत्वासंभवात् ॥ एतद्धि विनियमितभोजनस्यैव सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितमित्यादौ
प्राङ्मुखोन्नानि भुंजीतेत्यादौ च देशकालादिनियमः क्रियते ॥ एवं च सति यद्यपि श्रुतिविरोधात् ॥ शिवनिर्माल्य
भक्षणनिंदावाक्यानि सर्वाण्येव स्मृतिवदप्रमाणानीति वक्तुमुचितं ॥ अत एव विरोधे त्वनपेक्षं स्यादसति ह्यनुमा
नमिति जैमिनिसूत्रं ॥ श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी ॥ स्मृत्याचारविरोधे तु स्मृतिरेव गरीयसी ॥ तिन्यायः २६
॥ श्रुतिस्मृतिसदाचारइति मन्वादिसंगृहीतावरोहक्रमश्च संगच्छते ॥ तथापि ॥ अप्रत्याय्यद्विजनबोधनाय निर्माल्य

भक्षणनिषेधवाक्यानां बहुपुराणवचनावष्टंभेन व्यवस्थोल्लिख्यते॥ तत्र तावद्विधयः॥ लैंगे॥ पुष्पं फलं स्रग्गंधं च
वस्त्राण्याभरणानि च॥ शिवार्पितानि स्वीकुर्यादन्यथा किल्बिषी भवेत्॥१॥ शिवाग्रे शिवनिर्माल्यं गृह्णीते वशिवद्वि
जात॥ स्वयमेवादद्यान्न स नरकं प्रतिपद्यते॥२॥ ब्रह्मांडे॥ भक्ष्यमन्नं प्रयत्नेन निवेद्याश्नाति यः सदा॥ स नृपालः सर्व
वेत्ता भवत्येव हि सर्वथा॥३॥ अतीतानागतं ज्ञानं नृपालत्वं च शाश्वतं॥ जातिस्मरत्वं सौंदर्य्यमन्नैवेद्यस्य भक्षणात्॥४॥ म
नैवेद्यमनुच्छिष्टमत्तानुच्छिष्टमुत्तमं॥ योऽश्नाति स तु सर्वज्ञः स नृपालोऽपि जायते॥५॥ निर्माल्यसलिलं पीत्वा देवस्य ममशू
लिनः॥ क्षयापस्मारकुष्ठाद्यैः सद्यो मुच्येत बंधनात्॥६॥ निर्माल्यं परमं पुण्यं नैवेद्यं पापनाशनं॥ ब्रह्मचारिगृहस्थानां य
तीनां च विमुक्तिदं॥७॥ निर्मलत्वाच्च निर्माल्यं नृणां नैर्मल्यकारणं॥ यद्यदात्महितं लोके तत्तद्धर्म्यं परं स्वयत्॥८॥ शिव
लिंगार्पितं कुर्यात्तत्र तुष्यति शंकरः॥ उपवाससहस्राणि प्राजापत्यायुतानि च॥९॥ शिवार्पितं विना भुंक्ते सद्यो न भवति
किल्बिषी॥ पूर्वार्द्धे कुर्वन्निति शेषः॥ सूतसंहितायां॥ शंभोर्निर्माल्यकं श्रद्धं भुंजीयात्सर्वतो द्विजः॥ अन्यदेवस्य नै
वेद्यं भुंक्त्वा चांद्रायणं चरेत्॥ स्कांदे॥ प्रसादमन्यदेवस्य भुंजतां किल्बिषं भवेत्॥ शिवस्यैव तु निर्माल्यं भक्त्या धार्य्यं
द्विजातिभिः॥ इत्यादि शिवपुराणे॥ निर्माल्यलंघने दोषो धारणे च विशेषतः॥ न धारयेत्क्वचिच्छंभोर्निर्माल्यं न च भक्ष

येत्॥इत्यादिनिषेधवाक्यानितत्रमव्यवस्थामाह॥नारदः॥शिवानुभूतमखिलंपरिभाषते॥भोज्यंधार्यमितिद्वैधार्यद्विधंचतभ
क्ष्यते॥२॥देवस्वंदेवताद्रव्यंनैवेद्यंचनिवेदितं॥चंडद्रव्यंबहिःक्षिप्तंनिर्माल्यंषड्विधंमतं॥३॥इतिनिर्माल्यस्यषड्विधत्वमु
२७ क्त्वा॥दासीदासादीनांदेवस्वत्वंहेमरत्नप्रकरत्वादीनांदेवताद्रव्यत्वंसकल्पपूर्वकंसमर्पितानामन्नजलादीनांनैवेद्यत्वंचो
क्त्वाएतत्त्रिविधंनिर्माल्यमनर्हमितिकथ्यते॥प्रमादाद्भोजनंकुर्वन्भूमौसस्यादमंगलः॥१॥इतिएतत्त्रिविधस्याप्यस्यभ
भोजनंनिषिद्ध्वा॥शिवोपभुक्तंस्रग्गंधमन्नपानादिकंतथा॥निवेदितमितिप्रोक्तंसर्वपापहरंपरं॥इतिनिवेदितस्रग्गंधादि
भोजनंसंस्कृत्य॥चंडद्रव्यबहिःक्षिप्तयोरभक्ष्यत्वमुक्त्वा॥इदमाह॥निर्माल्यंषड्विधंभोज्यमेकमेवनिवेदितं॥अतोयानि
विधायकवचनानितानिनिवेदितविषयाणि॥यानितुनिषेधवाक्यानि॥तानिदेवस्वादिपंचविधनिर्माल्यविषयाणीति
नारदसंमताव्यवस्थावेदितव्या॥इदंचनिषेधितंशिवेतरदेवभक्तैरपिभोज्यं॥स्कंदे॥भुक्तंभुंजानइतिशूद्रादाहृतभक्तिबल
त्॥अतोतिरिक्तैस्तुएतैर्नभोज्यं॥शिवभक्तैस्तुनिवेदितादितरदपिभोक्तव्यं॥इतिशिवपुराणादिसंमताव्यवस्था॥तथा
हिशिवपुराणे॥निर्माल्यंनिर्मलंशुद्धंनिर्मलत्वादनिंदितं॥तस्माद्भोज्यंनिर्माल्यंपापाकृष्टैरशिवात्मकैः॥१॥श्रीमान्नध २०
रंयच्छंभोर्निर्माल्यंचनलंघयेत्॥जिह्वावापत्यसंयुक्तःएषसंस्कारवर्जितः॥२॥शिवनिर्माल्यभोजीचरौरवंनरकं

पूजादेतिशिवसंहितायां॥ व्यासजैमिनिसंवादे जैमिनिः॥ अनर्हं नमनैवेद्यं पादांबुकुसुमं दलं॥ इतीश्वरेण कथि
तं तत्र केचिन्महर्षयः॥१॥ वदंति तत्कथं स्वामिन्नयथार्थं कथयस्व मे॥ व्यासः॥ देवदेवस्य वचसो विषयोऽयं न जैमिने
॥ वीरभद्रेण शापिताः शिवभक्तिपराङ्मुखाः॥१॥ शंभोरन्यत्र देवेषु ये भक्ता ये न दीक्षिताः। तेषामनर्हमीशस्य तत्प्रसादश्च
तुष्टयं॥२॥ अत्रापि शिवपुराणे॥ शिवभक्तिवर्जितानां निर्माल्यभोजननिषेधः सामान्येन प्रतीयते॥ शैवसंहितायां
च॥ पाषंडादेरनर्हत्वं सामान्येन प्रतीयते॥ तथापि तन्निवेदितेतरविषयकम्॥ पूर्वोदाहृतश्रुतिनारदादिवचन
प्रामाण्यात्॥ नारदेन संकल्प्यार्पितस्यैवान्नादेर्नैवेद्यस्योक्तत्वेन तत्साहचर्यात्॥ पादांबुप्रभृतेरपि संकल्प्यार्पि
तस्यैव निषेधसंभवेन पूजामात्रसंकल्पेनार्पितस्य॥ ध्यानमात्रेणार्पितस्य च निषेधासंभवाच्च लोभादेवा शैवस्य धा
रणनिषेधेन प्राणयात्रार्थं धारणभक्षणयोः शैवस्यापि धारणादिनिषेधाभावाच्च॥ कामिके ईश्वरवचनमपि॥
अप्रबुद्धात्माऽशुचिर्लोभान्मद्भुक्तं पावनं परं॥ भक्षयेन्नाशमायाति सृष्ट्योत्पद्यमानादिव॥१॥ एवं च॥ यानि सामा
न्यशिवनिर्माल्यभोजननिषेधवाक्यानि तानि शिवभक्तिवर्जितानां निवेदितेतरं निर्माल्यभक्षणनिषेधपराणि॥ य
दि तु निवेदितभक्षणनिषेधवचनमपि क्वचिदुपलभ्यते॥ तत्तु प्रत्यक्षश्रुत्यादिविरोधादुक्तन्यायेनोपेक्षणीयमेव॥ यत्र तु

शै॰ भू॰ शिवसंनिधानंनास्ति॥ तत्रापिभुक्तिंतनदिवासितेनचंदनाक्षतादिकंवागादिनाशिवायसमर्प्यैवभोक्तव्यमुक्तं।
श्रुत्याद्यनुसारात्॥ आयतनविशेषेतुशिवभक्तिवर्जितानामपिलोभात्॥ एवंविधनिर्माल्यधारणेपिनदोषः॥
२८ तदुक्तमग्निपुराणे॥ बाणलिंगेचलेलौहेसिद्धलिंगेस्वयंभुवि॥ प्रतिमासुचसर्वासुनदोषोमाल्यधारणे॥ निर्माल्य
धारणेदूषणंयः॥ नचैवंनिवेदितदग्धमनिवेदितपरत्वेपि॥ शैवपरमशैवपरत्वेविधानेयात्रामात्रसाधकधारणपरमि
तिवाच्यं॥ तत्रपूर्वोक्तश्रुत्यादौबाधकसंकोचेप्रतिप्रसवायोगात्॥ लौहेधातुमयेस्कांदे॥ अथाहंशिवनिर्माल्यप
त्रपुष्पंदलंजलं॥ शालिग्रामस्यसंसर्गात्सर्वंयातिपवित्रतां॥ शालिग्रामसंसर्गेनाम॥ शालिग्रामस्यसर्वदेवात्म
कत्वेनसर्वदेवपूजाधारतयातत्रशिवबुद्ध्यापूजायांपत्रादीनामर्पणं॥ इतिलक्षणप्रकाशेस्थितं॥ तत्परत्वाच्च
त्योक्तं॥ शिवनामिविषयकमेतदिति॥ स्थितं॥ पूजाप्रकाशोदाहृतं॥ पाद्मे॥ शालग्रामशिलालिंगेयःकरोतिम
मार्चनं॥ तेनार्चितःकार्त्तिकेयप्युगानामेकसप्ततिं॥ नतुशालिग्रामेणसहपूजितशिवायार्पणमितिभ्रमितव्यं॥ अ
नादरस्यापत्तेः॥ तथाप्रवर्तितः॥ तस्मात्शिवनिर्माल्यंसर्वोत्कृष्टं॥ नकस्यापिवर्जनीयमितिसिद्धं॥ अतएव॥ नि २८
यतकमलसंख्यापरिपूरणायसमर्पितंनेत्रंनिर्माल्यभूतंविष्णुर्दधार॥ इतिपुराणेषुप्रसिद्धं॥ ब्रह्मादयोपिशिव

निर्माल्यंधारयंति॥तथाच॥नागवेत्स्वचतुर्थ्यंशंधेहत्तंप्रतिमतीवाक्यं॥किंवापिशिवाख्यमपिशिवंनविद्वस्त्वदमे॥ब्रह्मादय
स्तमवकीर्यजटाःश्मशाने॥तस्मात्स्मनम्मन्कपाल्यवमतपिशाचैर्मूर्द्धमिर्दधतित्वच्चरणावसृष्टं॥२॥तच्चरणादवसृष्टं
गलितंतंनिर्माल्यंयन्मूर्द्धनिधारयंतीतिश्रीधरः॥यद्यपिपिशाचान्निर्माल्यमेवभोक्तव्यंनान्यदेवनिवेदितंनवाऽनिवेदितं॥इति
पूर्वोदाहृतस्मृत्यादिबलात्सिद्धेचैवंनिष्पन्नंसमाधानंतथाश्रीमद्भागवतादिवाक्यानिनिषेधरूपाणिबहुशउपलभ्यंते॥त
थापिविस्तरभयात्॥अस्मासुपरेषांनिबंधदृष्टत्वसंभावनानयाचूतानिनोपन्यस्तानि॥इत्यलं॥यदक्षीदुग्धीकेपचतिविवि
धंत्वौषधिगणंतथैवान्नंवह्नीरविरपिपुनातीहसकलं॥विधियैदैतेजाजनयतिजगत्स्थावरचरं॥सुवर्णीयइतःसुरत
रगणाबिभ्रतितनौ॥९॥कृतीयेदृक्कोजामनसिदधतेवाचिवबुधायदंश्रुत्यंचक्रंहरिरवतिबिभ्रत्त्रिभुवनं॥तथाधत्ते
नेत्रंहरयजनसंभूतमनिशं॥कदुःखेनाकुंतत्परमशिवसंपर्करहितः॥१०॥ इतिश्रीमत्स्वामिसदानंदविरचितेशैव
सुधाकरेनैवेद्योत्कर्षनिरूपणंनामैकोनविंशःकिरणः॥१९॥अथसद्योजातादिपंचब्रह्ममंत्रैर्बोधायनोक्तप्रकारे
णपार्थिवपूजाप्रयोगः॥तत्रादौकृतावश्यकक्रियःस्नानादिनाशुचिर्भूत्वाधृतत्रिपुंड्ररुद्राक्षमालः॥कृतसंध्यावंदना
दिनित्यक्रियःप्रयतोब्रह्मचारीस्वच्छवासानदीतीरादिशंगत्वाशुचौदेशेपाषाणवेणुकीटकेशास्थिवालुकादि

शै॰सु॰ दोषरहितां मृदं दृष्ट्वा॥ तत्र गंधाक्षतपुष्पचारैर्भूमिं संपूज्य नत्वा॥ ईशानकोणगतां मृदं शस्त्रेणोत्कीर्य॥ अष्टांगुलां मृदम
पाकृष्य॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना॥ मृत्तिके त्वां च गृह्णामि प्रजया च धनेन च॥२॥ इति मंत्रेण शुद्धां तन्मृद
२५ मादाय॥ शूद्रादिस्पर्शरहितो मौनी गृहे आगत्य शुचिस्थले तां स्थापयेत्॥ कृताचमनः श्वेताजिनकुशोत्तरे स्वासने उद
ङ्मुख उपविशेत्॥ ततः पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता॥ त्वं च धारय मां देवि पवित्रं कुरु चासनं॥२॥ इति भूमि
प्रार्थ्य॥ अपसर्पंतु ते भूता ये भूता भूमिसंस्थिताः॥ ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया॥ इति पठित्वा॥ गौरसर्षपा
न् चतुर्दिक्षु विकिरेत्॥ ततो विष्णुर्विष्णुरित्याद्येवंगुणविशेषणविशिष्टायां पुण्यतिथौ विस्पंते देशकालादि संकीर्त्य
मम सकलमनोरथसिद्धिदुरितक्षयद्वारा श्रीभवानीशंकरप्रीत्यर्थं अमुकसंख्याकपार्थिवलिंगानां पूजनं तंत्रेण पृथ
क् पृथग्वा करिष्ये इति संकल्पं कुर्यात्॥ यजमानस्य चेदमुकशर्मणो यजमानस्याभीष्टसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं
अमुकसंख्यया पार्थिवलिंगानां पूजनं करिष्यामीति संकल्पं कुर्यादिति॥ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः॥
भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः॥ इति मंत्रेण मृदश्चूर्णं कुर्यात्॥ वामदेवाय नमो ज्येष्ठाय नमः॥ श्रेष्ठाय नमो रु ९
द्राय नमः॥ कालाय नमः॥ कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः॥ सर्वभूतदमना

यनमो॥मनोन्मनायनमः॥इतिजलसेचनं॥अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः॥सर्वेभ्यः॥सर्वसर्वेभ्योनम
स्तेअस्तुरुद्ररूपेभ्यः॥इतिसंयोजनं॥तत्पुरुषायविद्महेमहादेवायधीमहि॥तन्नोरुद्रःप्रचोदयात्॥इतिपिंडीक
रणं॥ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम्॥इतिमंत्रेण
यथोक्तमेवखलमखंडलिंगंलिंगानिवाविधायसद्यःसमस्तापनाशनेतिशिरसानिधाय॥ततोवामपाणौवेदिकायांताम्र
पात्रेवाबिल्वपत्रंनिधाय॥तदुपरिसाक्षतपुष्पंलिंगंसंस्थाप्यप्राणप्रतिष्ठांकुर्यात्॥प्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुरु
द्राऋषयः ऋग्यजुःसामानिछंदांसि॥प्राणशक्तिर्देवता॥आंबीजं॥ह्रींशक्तिः॥क्रोंकीलकं॥पार्थिवलिंगप्रतिष्ठा
पनेविनियोगः॥ॐआंह्रींक्रोंयंरंलंवंशंषंसंहंहंसः॥शिवस्यप्राणाशिवस्यजीवः॥शिवस्यसर्वेंद्रियाणिइहागत्यसु
खंचिरंतिष्ठंतुस्वाहा॥शिवेहागच्छेहतिष्ठममपूजांगृहाणेतिप्राणप्रतिष्ठांकृत्वा॥लिंगानांबहुत्वेप्राणप्रतिष्ठांपृथ
क्पृथक्कुर्यात्॥पूजनेविकल्पः॥तंत्रेणपृथक्पृथग्वा॥सपुष्पोदकेनलिंगेदेवमावाहयेत्॥ॐभूःपुरुष
मावाहयामि॥ॐभुवःपुरुषमावाहयामि॥ॐभुवःपुरुषमावाहयामि॥ॐस्वःपुरुषमावाहयामि॥ॐभूर्भुवःस्वःपुरुष
मावाहयामि॥आमायात्भगवान्महादेवइतिआवाहयेत्॥स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं॥तावत्त्वंप्रीति

श्रौ॰सु भावेनलिंगेस्मिन्संनिधिंकुरु॥२॥इतिसंप्रार्थ्य॥स्वस्यवामभागेजलपूर्णेकलशंस्थापयेत्॥सामग्रींदक्षिण
भागे॥आपोवाइदंसर्वंविश्वाभूतान्यापःप्राणावाआपःपशवआपोन्नमापोमृतमापःसम्राडापोविराडाप
३० स्वराडापश्छंदांस्यापोज्योतींष्यापोयजूंष्यापःसत्यमापःसर्वादेवता॥आपोभूर्भुवःस्वरापओम्॥इत्यभि
मंत्र्य॥गंधाक्षतैःसंपूज्य॥कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः॥मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृता
ः॥१॥कुक्षौतुसागराः॥सप्तसप्तद्वीपावसुंधरा॥ऋग्वेदोथयजुर्वेदः॥सामवेदोह्यथर्वणः॥अंगैश्चसहिताः
सर्वेकलशंतुसमाश्रिताः॥अत्रगायत्रीसावित्रीशांतिःपुष्टिकरीतथा॥आयांतुशिवपूजार्थंदुरितक्षयकार
काः॥इतिकलशेसर्वतीर्थान्यावाह्य॥तत्रस्थैर्जलैस्तत्पुरुषायविद्महेमहादेवायधीमहि॥तन्नोरुद्रःप्रचोदया
त्॥इतिरुद्रगायत्र्यास्वशरीरंपूजासंभारांश्चसंप्रोक्ष्य॥ततोध्यानं॥ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्राव
तंसं॥रत्नाकल्पोज्ज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नं॥पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानं॥
विश्वाद्यंविश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रं॥१॥दक्षोत्संगनिषण्णकुंजरमुखंप्रेम्णाकरेणस्पृशन्॥वामो ३०
रुस्थितवल्लभांकललितस्कंदंकरेणालसन्॥दृष्ट्वाभीतिमनोहरंकरयुगंबिभ्रत्प्रसन्नाननो॥भूयान्नःशरदिंदु

स्कंदरतमुंश्रेयस्करः शंकरः ॥२॥ आत्मानं रुद्ररूपं ध्यात्वा ॥ मनः कल्पितैर्गंधादिभिरन्यथैवा मनसा पुष्पाक्षता
मनः ॥ सिस्थितश्चिवंपुष्पक्षेपेण लिंगे आगतं विभाव्य पूजयेत ॥ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ॥ आ-
सनं समर्पयामि ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु यो रुद्रो विश्वा भुवनानि विवेश ॥ तस्मै रुद्राय-
नमो अस्त्विति यजुषा पाद्यपात्रमभिमंत्र्य प्रक्षाल्य ॥ तिरः पवित्रमपआनीय ॥ पुनस्तेनैवापोभिमंत्र्य सहपवित्रेण
दिक्षु संदर्शयित्वा ॥ भवे भवे नाति भवे भजस्व मां पाद्यं समर्पयामि ॥ पुनर्यो रुद्रो अग्नौ इति यजुषा अर्घपात्रमभिमंत्र्य प्रक्षा-
ल्य तिरः पवित्रमपआनीय पुनस्तेनैवापोऽभिमंत्र्य सहपवित्रेण दिक्षु संदर्शयित्वा ॥ भवोद्भवाय नमः ॥ अर्घं समर्पयामि
पुनस्तथैवाचमनपात्रमादिक्षु संदर्शयित्वा वामदेवाय नमः ॥ आचमनं समर्पयामि ॥ ज्येष्ठाय नमः मधुपर्कं समर्पणं ॥ आप्यायस्व-
समेतु ते इति ॥ पयः ॥ पृथिव्यामिति वा पयः स्नानं समर्पयामि ॥ दधिक्राव्णो अकारिषमिति दधिस्नानं समर्पया
मि ॥ घृतं मिमिक्षिरे ॥ इति घृतं ॥ घृतवान इति वा घृतस्नानं समर्पयामि ॥ मधुवातेति मधुस्नानं समर्पयामि ॥ स्वा
दुः पवस्वेति ॥ अपां रसमिति वा शर्करास्नानं समर्पयामि ॥ शुद्धोदकस्नानानि ॥ आपो हि ष्ठेत्याद्या अत्र मंत्राः पठ
नीयाः ॥ तथा सांगेन न्यात रुद्रीयेणाभिषेकं कुर्यात ॥ अथ व्याहृतिभिः ॥ प्रदक्षिणमुदकं परिषिंच्य ॥ पवित्रं पादम्

ले निधायाद्भिस्तर्पयति॥ भवं देवं तर्पयामि॥ शिवं देवं तर्पयामि॥ ईशानं देवं तर्पयामि॥ पशुपतिं देवं तर्पयामि॥ रुद्रं दे
वं तर्पयामि॥ उग्रं देवं तर्पयामि॥ भीमं देवं तर्पयामि॥ महांतं देवं तर्पयामि अष्टभिर्मंत्रैस्तर्पणं कुर्यात्॥ ज्येष्ठाय नमः
३१ ॥ वस्त्रं समर्पयामि॥ रुद्राय नमः॥ उपवीतं समर्पयामि॥ कालाय नमः॥ गंधं समर्पयामि॥ कलविकरणाय नमः॥
अक्षतान्समर्पयामि॥ बलविकरणाय नमः॥ बिल्वपत्रादिधत्तूरादिपुष्पाणि समर्पयामि॥ बलाय नमः॥ धूपं सम
र्पयामि॥ बलप्रमथनाय नमः॥ दीपं समर्पयामि॥ ततो नैवेद्यं॥ अमृतोपस्तरणमसीति प्रतिपदं कृत्वा॥ हविरविरु
द्धं सर्वं स्वादुवस्तु कंदमूलफलानि प्रक्षिपेत्॥ मुहूर्तमनपेक्षमाण आसीनो हविरुद्वासयामि॥ इति नैवेद्यमुद्वास्या
ऽमृतापिधानमसीति प्रतिपदं कृत्वा॥ सर्वभूतदमनाय नमः॥ नैवेद्यं समर्पयामि॥ मनोन्मनाय नमः॥ आचमनं सम
र्पयामि॥ शंभवे नमः॥ तांबूलं समर्पयामि॥ शंभवे नमः॥ प्रदक्षिणं समर्पयामि॥ शंभवे नमः॥ नीराजनं समर्पया
मि॥ शंभवे नमः॥ नमस्कारान्समर्पयामि॥ लिंगस्य आग्नेयादिदिक्षु वक्ष्यमाणैर्मंत्रैरक्षतान्क्षिपेत्॥ ॐ भवाय क्षि
तिमूर्तये नमः॥ शर्वाय जलमूर्तये नमः॥ ईशानाय अग्निमूर्तये नमः॥ पशुपतये वायुमूर्तये नमः॥ रुद्राय आ ३१
काशमूर्तये नमः॥ उग्राय यजमानमूर्तये नमः॥ भीमाय सोममूर्तये नमः॥ ततः प्रार्थना॥ नमः ॐकाररूपाय वे

दरूपायतेनमः॥ अलिंगलिंगरूपाय विश्वरूपायतेनमः॥१॥ नमोमोक्षप्रदेतुभ्यंनमोमाहात्मनेतथा॥
नमः शब्दस्वरूपायरूपातीतायतेनमः॥२॥ त्वंमातासर्वलोकानांत्वमेवजगतःपिता॥ त्वंभ्रातात्वंसुहृन्मि
त्रंत्वंप्रियःप्रियरूपधृक्॥३॥ त्वंगुरुस्त्वंगतिःसाक्षीत्वंपितात्वंपितामहः॥ नमस्तेभगवन्रुद्रभास्करामि
ततेजसे॥४॥ संसारसागरोन्मग्नंमामुद्धरशिवाव्यय॥ अनेनपूजनेनत्वंवांछितार्थप्रदोभव॥५॥ दंडवत्
प्रणतोभूत्वास्तुत्वाचैवविशेषतः॥ एकाग्रः प्रयतोभूत्वामंत्रमेतदुदीरयेत्॥६॥ अंगहीनंक्रियाहीनंविधि
हीनंमहेश्वर॥ पूजितोसिमयादेवतत्क्षमस्वांबिकापते॥७॥ अन्यथासक्तचित्तेनक्रियाहीनेनवाविभो॥
मनोवाक्कायदुष्टेनपूजितोसित्रिलोचन॥ तत्सर्वंक्षम्यतांदेवदासेकृत्वादयांमयि॥८॥ इतिप्रार्थनांकृत्वा
॥ रौद्रीभिः ऋग्यजुःसामाथर्वभिश्चार्षैःस्तोत्रैःस्तुत्वायथाशक्तिपंचाक्षरमंत्रस्यजपंकुर्यात्॥ शिवपंचाक्षर
मंत्रस्यवामदेवऋषिः पङ्क्तिश्छंदः॥ शिवोदेवता॥ सदाशिवप्रीत्यर्थेजपेविनियोगः॥ अनेनजपेनशिवः
प्रीयतां॥ प्रयातुभगवान्महादेवइतिविसर्जनंकुर्यात्॥ बाणलिंगादावावाहनविसर्जनेनस्तः॥ आवाहन
विसर्जनयोः॥ पूर्वोक्तरूपत्वेतु॥ तत्रापितेस्तएवेत्युक्तंप्राक्॥ आवाहनंनजानामिनजानामिविसर्जनं॥

पूजांचैवनजानामित्वंगतिः॥परमेश्वरइतिमंत्रंपठित्वा॥सव्यहस्ततलेनलिंगंस्पृशेत्॥ ततःशिवनिर्णेज
नोदकंचुलुकमितंवारत्रयंपिबेत्॥तत्रमंत्रः॥कालमृत्युहरंपुण्यंब्रह्महत्याविनाशनं॥व्याधिघ्नंपुण्यपास्य
शिवनिर्णेजनोदकं॥इतिवैदिकोक्तप्रकारेणपूजापद्धतिः॥ ॥इतिश्रीमत्स्वामिसदानंदविरचितेशैवसुधा
३२ करेवैदिकोक्तपार्थिवपूजानिरूपणंनामविंशःकिरणः॥२०॥ ॥आयुरारोग्यवृद्ध्यर्थंपशुपुत्रधनाप्तये॥ना
ममंत्रेणकर्तव्यंस्त्रीभिःपार्थिवपूजनं॥१॥स्त्रीभिःशूद्रैश्चकर्तव्यंधर्मकामार्थसिद्धये॥सदाश्रीपार्थिवेशस्यपूजनंना
ममंत्रतः॥२॥इतिपाद्मेस्त्रीशूद्राणामपिपार्थिवपूजाविधानात्॥तेषामपिनाममंत्रेणपद्धतिः॥पूर्वोक्तरीत्यादेशा
कालादिसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थंपार्थिवलिंगपूजनमहंकरिष्ये॥हरायनमः॥मृदाहरणं॥महेश्वरायनमः
संघट्टनं॥शंभवेनमःप्रतिष्ठापनं॥देवस्यप्राणाजीवःसर्वेंद्रियाणिइहागत्यसुखेनचिरंतिष्ठंतु॥ध्यायेन्नित्यंमहे
शमितिदेवंध्यात्वा॥शूलपाणयेनमः॥ आवाहनं॥पिनाकधृषेनमः पाद्यं॥शिवायनमः॥इतिमंत्रेणार्घ्यंवम
नस्नानवस्त्रयज्ञोपवीतगंधपुष्पधूपदीपनैवेद्यांतंकुर्यात्॥यद्वा॥शिवायनमइतिनमोंतेननाममंत्रेणैवस्त्री ३२
शूद्रैःसर्वमपिपार्थिवेश्वरपूजनंकार्यं॥ ॥इतिश्रीमत्स्वामिसदानंदविरचितेशैवसुधाकरेस्त्रीशूद्रयोःपार्थि

वधूजानि[illegible]नामेकविंशः किरणः ॥२१॥ अथैकादशी ॥ एतद्व्रतं हि शैवानामविविहितमस्ति ॥ तथा च शिव
गीतायां ॥ एकादश्यामुपोष्यैव यः पूजयति मां निशि ॥ सोमवारे विशेषेण समेऽनन्तो न नश्यति ॥ शिवधर्मे ॥ वैष्णवो
वाथ शैवो वा कुर्यादेकादशीव्रतं ॥ सौरपुराणे ॥ वैष्णवो वाथ शैवो वा सौरोऽप्येतत्समाचरेदिति ॥ नंदीपुराणे ॥ एका
दश्यष्टमी चैव पक्षयोश्च चतुर्दशी ॥ शिवस्य तिथयः प्रोक्ता मुनिभिः शौनकादिभिरिति ॥ एतन्माहात्म्यं नारदीय
पुराणे ॥ एकादशीसमुत्थेन वह्निना पातकेंधनं ॥ भस्मतां याति राजेंद्र अपि वर्षशतोद्भवं ॥१॥ नेदृशं पावनं लो
के मराणां ॥ भूप विद्यते ॥ यादृशं पद्मनाभस्य दिनं पातकहानिदं ॥२॥ एकादशेंद्रियैः पापं यत्कृतं भवति प्रभो
॥ एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् ॥३॥ एकादशीसमं किंचित्पापत्राणं न विद्यते ॥ स्वर्गमोक्षप्रदा ह्येषा रा
ज्यपुत्रप्रदायिनी ॥४॥ सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी ॥ न गंगा न गया भूप न काशी न च पुष्करं ॥ न चै
व कौरवं क्षेत्रं न रेवा न च वेदिका ॥ यमुना चंद्रभागा च तुल्या भूप हरेर्दिनात् ॥६॥ चिंतामणिसमा ह्येषा ह्यथवा नव
निधेः समा ॥ संकल्पपादपप्रख्या वेदवादोपमाथवा ॥७॥ एकामेकादशीं वापि समुपोष्य जनार्दनं ॥ कामेनापि स
मभ्यर्च्य संसारान्मुक्तिमाप्नुयात् ॥८॥ प्रसंगाद्वापि दंभाद्वा मोहाद्वा त्रिदशाधिप ॥ एकादश्यां मनः ॥ कृत्वा सर्वदुः

नि॰सि॰ खात्स्मर्यते॥ एवं देवलः॥ न शंखेन पिबेत्तोयं न खादेत्कूर्मसूकरौ॥ एकादश्यां न भुंजीत पक्षयोरुभयोरपि॥ १०॥
रटंती हपुराणानि भूयोभूयो वरानने॥ न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे॥ ११॥ न भुयानि नञ्युक्तानि वाक्या
३३ नि श्रूयंते॥ तानि किं पक्षद्वयेपि भोजनप्रतिषेधपराणि॥ उत पर्युदासवृत्त्या भोजनसंकल्पविधिपराणि॥ इति वे
न्निषेधा एव॥ एते भोजनस्येति न्यायविदो मन्यंते॥ न भुंजीतेति निषेधेन विधायकप्रत्ययेन सह नञः संबंधात्॥ त
स्याग्ने नञः पर्युदासलक्षणायां च गौरवात्॥ न शंखेन पिबेत्तोयमित्यादिभिः॥ संप्रति पन्ननिषेधैः साहचर्याल्लोकप्र
पवितत्वाच्च॥ नैतेषु वाक्येषु पर्युदासकारणं॥ व्रतशब्दसामानाधिकरण्यादिश्रूयते॥ पर्युदासपक्षे च॥ गृहस्थो
ब्रह्मचारी चेत्यत्र वाक्ये पक्षद्वयेप्युपवासप्रसंगे गृहस्थग्रहस्थग्रहणमनुपपन्नं स्यात्॥ त्रुल्कामेव सदा गृही इत्यादिनि
वाक्ये च वक्ष्यमाणे विरोधात्॥ अतो भोजनप्रतिषेधा इमे॥ न चैतादृशेषु वाक्येषु वक्ष्यमाणव्रतविधायकवचनैका
र्थ्यार्थं॥ मूलभूतप्रकृतिकल्पनागौरवाभावार्थं च संकल्पलक्षणैवास्त्विति वाच्यं॥ फलमूलत्वेन मूलकल्पनागौ
रवस्यादोषत्वात्॥ अन्यथा निषेधस्यापि पक्षेऽधिकरणमुच्छिद्येत॥ येषु पुनर्वचनेषु॥ नञ्संबद्धभोजनार्थकश ३३
ब्दयुक्तेषु व्रतशब्दसमभिव्याहारो दृश्यते॥ तानि व्रतशब्दसामानाधिकरण्यबलात्॥ पर्युदासाश्रवणेन भोज

नसंकल्पविधिपराणि॥ यथा॥ परमापदमापन्नो हर्षे वा समुपस्थिते॥ सूतके मृतके वापि न त्यजेद्द्वादशीव्रतं॥ सू
तके तु नरः स्नात्वा प्रणम्य मनसा हरिं॥ एकादश्यां न भुंजीत व्रतमेवं न लुप्यते॥ यानि चोपवासशब्दवंति नञ्रहित
शब्दवंति षष्ठिषपि वचनेषु अभोजनसंकल्प एव विधीयते॥ उपवासशब्दस्य व्रतविशेषवाचित्वाद्व्रतशब्दस्य सं
कल्पविशेषवाचित्वात्॥ यथा॥ एकादशीमुपोषेत पक्षयोरपि॥ यथा शुक्ले तथा कृष्णे न विशेषोस्ति कश्चन॥
ब्रह्मवैवर्ते॥ प्रकुर्याद्वैष्णवं व्रतमित्यादि॥ तथा फलव्याहारसहितेषु॥ यदीच्छेद्धरिसायुज्यं श्रियं संततिमेव वा॥
एकादश्यां न भुंजीत पक्षयोरुभयोरपि॥ इत्यादिषु अभोजनसंकल्प एव पर्युदासवृत्त्या विधीयते॥ निषेधपरत्वे फ
लस्संबंधानुपपत्तेः॥ एतानि त्रिविधानि वाक्यान्येकार्थान्येकेतिकर्तव्यताकानि॥ इतिकर्तव्यता त्वित्थं॥ गृहीत्वोदुं
बरं पात्रं वारिपूर्णमुदङ्मुखः॥ उपवासं तु गृह्णीयाद्यथासंकल्पयेद्बुधः॥१॥ इति वाराहपुराणे॥ तत्रोदुंबरं ताम्रं तेन घटि
तमौदुंबरं॥ यथासंकल्पयेदिति तस्य तयोर्हि दिति शेषः॥ अयं संकल्पस्तु दशम्यां रात्रौ कर्तव्यः॥ तदुक्तं ब्रह्मवैवर्ते॥ द
शमेहरिदिने सम्यग्विधाय नियमं निशि॥ दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतं॥ संकल्पमंत्रश्च विष्णुस्मृतावुक्तः॥ एका
दश्यां निराहारः स्थित्वाहमपरेहनि॥ भोक्ष्येहं पुंडरीकाक्ष शरणं मे भवाच्युत॥ इत्युच्चार्य ततो विद्वान्पुष्पांजलिं तथार्पये

नि॰सि॰ त॥ ज्ञो वादीनां मुहे मा ह्रीं सौ रसुरावो॥ सावित्र्याप्ययवानाम्नां संकल्पं तु समाचरेत्॥ सावित्र्या त्रिवगाय ॥ शिव
गायत्री॥ ॐ तत्सत्सवायेतिमानुस्वार्यो ह्युक्त्वा अपरे ह्युमितोऽस्म्यामीति वदेत्॥ यच्च॥ त्रिधा नामोच्चार्य तथा नदे
त॥ पुंडरीकाक्षो ह्यच्युतस्थाने पार्वतीनामपि अम्बुरश्रुति वाक्यहः कार्यः॥ फलाविमन्त्रणे मिराहार द्रूस्यपोत्थफलाहा
२४ रद्रूपएमिल्पोत्थान्नमिति वोहः कार्यः॥ एवं संकल्पत्रयोऽपि॥ कृष्णैकादश्यां तु॥ बोधिन्यां कर्तव्या श्रिस्याः शाकु
निक्षामेरखेष्णवगृहस्थैर्मोपवासमीया॥ भविष्यांतरे॥ शुक्ला गृहस्थैः कर्तव्या भोगसंतानवर्द्धिनी॥ मुमुक्षुभि
स्तथा कृष्णा ने व्रतेनोपदेशिता॥ इति युधिष्ठिरं प्रति कृष्णवाक्यं॥ ते॥ तुल्यं॥ गोभिलः॥ एकादश्यां न भुंजीत पक्षयो
रुभयोरपि॥ वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही इत्यादिवाक्ये गृहस्थानां शुक्लायामेव व्रतविधानात्॥ कृ
ष्णा॥ वनस्थयतिधर्म इति पदद्वय दर्शनादिदं वाक्यद्वयं व्रतविषयकमेव॥ निषेधपालनं काम्यव्रतं च सर्वैः कृ
ष्णायां सर्वगृहिणां संभवस्येव॥ निषेधानां विशेषानपेक्षत्वेनत्यत्वादिषु॥ उपसंहारायोग्यत्वेन गृहस्थेऽपि वृद्ध
स्तिसंभवात्॥ पुत्रवांश्च समार्यश्च बंधुयुक्तस्तथैव च॥ उभयोः पक्षयोः काम्यं व्रतं कुर्यात्तु वैष्णवमिति नारदो २४
क्तेश्च॥ भविष्ये॥ यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा॥ तुल्ये ते मन्यते यस्तु स हि वैष्णव उच्यते॥ नारदी

ये॥ मित्स्यं नक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः॥ पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणं॥ ७॥ शयनाबोधिनीमध्ये
याकृष्णैकादशी भवेत्॥ सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन॥ इति वचनेन॥ नान्या कृष्णेत्यनुवादः आतेर
भावात्॥ एकादश्यां च कृष्णायां संक्रांतौ रविवासरे तथा॥ पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही॥ १॥ इति वचनं॥
शयनीबोधिनीमध्यवर्त्तिकृष्णैकादशी पुत्रवतो गृहस्थस्य उपवासनिषेधपरं॥ अन्यथा गृहस्थस्य शुक्ला
यामेवोपवासविधानेन कृष्णायामुपवासप्राप्तेरेवाभावात्तद्वैयर्थ्यं स्यात्॥ ईदृशेषु वाक्येषु रव्यादावुपवासस्य
पारणस्य निषेधो रव्यादिवारनिमित्तकस्य तु तस्य तत्पूर्वदिनकृतव्रतांगपारणस्य च तु संक्रांतिरविवारयोर्यैका
दशी॥ तद्व्रतस्नातयोरन्होरेकादशीव्रतपारणस्य च॥ भृगुभानुदिनो वेतास्तथे संक्रांतिसंयुता॥ एकादशीसदो
पोष्या पुत्रपौत्रप्रवर्द्धिनीति विष्णुधर्मवाक्यविरोधात्॥ भानुवारादौ तु तेतु अमावास्या द्वादशी च संक्रांतिश्च
विशेषतः॥ एताः शस्तास्तिथयो भानुवारस्तथैव च॥ अत्र स्नानं जपो होमस्तीर्थदेवादिपूजनं॥ उपवासस्तथा
दानमेकैकं पावनं स्मृतं इति मानं॥ पारणं तु॥ सप्तवारानुपोष्यैव सप्तधा संयतेंद्रियतेंद्रियः॥ सप्तजन्मकृतात्पा
पात्सत्प्रमुणाद्वेवमभ्रपतीतिशामिवारव्रतां ग्रयार॥ वोसातं॥ मित्स्यं ह्यो रयनयोर्मित्स्ये विषुवतोर्द्वयोः॥ वङ्कार्कयो
सं

श्रौ॰सु ग्रहणयोर्व्यतीपातेषुपर्वसु ।। अहोरात्रोषितःस्नानंश्राद्धंदानंतथाजपं ।। यःकरोतिप्रसन्नात्मातस्यस्याद्क्षयं
वतद्दिति ।। संक्रांतिपूर्वदिनवृतांगतयासंक्रांतौप्राप्तउपवासनिषेधेतुकिंचिद्भक्ष्यंप्रकल्पयेत् ।। नदुष्यत्युपवासे
३५ नउपवासफलंलभेत् ।। निषेधोह्ययंघनव्ययुक्तप्रत्यवायपरिहाररूपफलं ।। भक्ष्यकल्पनाच ।। वायुपुराणे ।।
नक्तंहविष्यान्नमनोदनंचफलंतिलाःक्षीरमथांबुचाज्यं ।। यत्पंचगव्यंयदिवापिवायुः ।। प्रशस्तमत्रोत्तरमुत्त
रंयत् ।। २ ।। अशक्तावपीदमेवबोध्यं ।। मार्कंडेयस्त्वनुकल्पांतरमप्याह ।। एकभक्तेननक्तेनतथैवायाचितेनच ।।
उपवासेनदानेननिर्द्वादशिकोभवेत् ।। इतिहविष्यंतु ।। हैमंतिकंसितास्विन्नंधान्यंमुद्गास्तिलायवाः ।। कलाय
कंगुनीवारावास्तूकंहिलमोचिका ।। षष्टिकाःकालशाकंचमूलकंकेमुकेतरत् ।। लवणेसैंधवसामुद्रेगव्ये
चदधिसर्पिषी ।। पयोनुद्धृतसारंचपनसाम्रहरीतकी ।। तिंतिडीजीरकंचैवनागरंगजपिप्पली ।। अतैलपक्वंमु
नयोहविष्यान्नंप्रचक्षतइतिबोध्यं ।। अन्यत्र ।। नारिकेरफलंचैवकदलीलवलीतथा ।। आम्रमामलकंचैवपं
नसंचहरीतकी ।। वृतांतरे ।। प्रशस्तंचहविष्यंचक्षतेबुधाइति ।। इदंचाष्टमान्पूर्व्वमाःशीतेर्वर्षाछूस्नचायोदिनि ३५
ःसर्वैःकार्य्यं ।। तथाभवनविष्ये ।। अष्टवर्षाधिकोमर्त्योह्यशीतेर्न्यूनवत्सरः ।। एकादश्यामुपवसेत्पक्षयोरुभयोरपीति

गृहस्थस्यकृष्णैकादशीव्रतनिषेधस्योक्तत्वात्॥ यस्तुगृहस्थातिरिक्तः॥ गृहस्थोब्रह्मचारीवायोऽनश्नंस्तुत
पश्चरेत्॥ प्राणाग्निहोत्रलोपेनअवकीर्णीभवेत्तुसः॥ इतिवचस्तुनिरंतरोपवासनिषेधकमित्यन्यत्रविस्तरः॥
आहिताग्निरनड्वांश्चब्रह्मचारीचतेत्रयः॥ अश्नंतएवसिध्यंतिनैषांसिद्धिरनश्नतामित्यापस्तंबवचनंतु॥ अग्निहो
त्रादिनिरोधकात्वात्कर्जनकोपवासनिषेधकमिति॥ उचितमेवचैतत्॥ यत्तेषांश्रौतानुष्ठायिनांनित्यस्याप्यस्य।
स्मार्तस्यानुकल्पादिनानिर्वाहणं॥ तस्यांचव्रतेनदौर्बल्यसंभावनायां॥ उपावृत्तस्यपापेभ्योयस्तुवासोगुणैःसह॥ उपवासः
सविज्ञेयोनोपवासस्तुलंघनं॥ पापेभ्योव्रतांगतयानिषिद्धेभ्यउपावृत्तस्य॥ गुणैर्हरिहरस्मरणनामकीर्तनार्चनैःस
हवासोऽवस्थानमहोरात्रंसउपवासः॥ सर्वभोगविवर्जितोज्ञेयइत्यर्थः॥ तस्मात्इतरसत्कर्मलोपोनन्याय्यः॥ तदर्थंन
क्तादिअनुकल्पाःकार्याः॥ असत्यंभाषणंद्यूतंदिवास्वप्नंचमैथुनं॥ एकादश्यांनकुर्वीतउपवासपरोनरः॥ पतितंत।
पाषंडिसंभाषानृतस्तेयादिकंवर्जयेदिति॥ तथा॥ असकृज्जलपानाच्चतांबूलस्यचभक्षणात्॥ उपवासोविनश्येत
दिवास्वापाच्चमैथुनात्॥ ब्रह्मचर्यंतथाशौचंसत्यमामिषवर्जनं॥ व्रतेष्वेतानिचत्वारिवरिष्ठानीतिनिश्चयः॥ आमिषं।
मासं॥ तस्यवर्जनंप्राशनमिह॥ उपवासदिनेप्राप्त्यभावात्॥ यद्वा॥ आमिषंइतिपानीयंगोवर्जक्षीरमामिषं॥ मसू

श्रो॰सु॰ रमामिषं मत्स्येफले जंबीरमामिषं॥ आमिषं शुक्तिकाचूर्णमामिषं महिषीपयः॥ आमिषं दत्तिपानीयमारनालं तथामि
षमिति स्मृत्यंतरोदाहृतमामिषं ग्राह्यं॥ तन्नु॥ एकादश्यां निषिद्धं॥ स्त्रीणां तु प्रेक्षणात्॥ स्पर्शात्ताभिः संकथनादपि॥
निःस्पंदते ब्रह्मचर्यं न दारेष्वृतुसंगमात्॥ मावसहिते न चेतमास्त्रीणां प्रेक्षणादिभिः ब्रह्मचर्यं निःस्पंदते॥ अत्रपतीत्य
३६ भिप्रायः॥ उपवासे तथा श्राद्धे न कुर्याद्दंतधावनं॥ दंतानां काष्ठसंयोगो हंति सप्त कुलानि च॥ दंतशोधनमत्र निषि-
ध्यते॥ येन केन चित्काष्ठग्रहणं निंदार्थवादगतमविवक्षितं॥ निषेधस्यानिवृत्तिकफलत्वेन विशेषस्यानाकांक्षितत्वात्
॥ अत एव शार्करानपदधातीति विधावुद्देश्यस्य॥ पुनर्विशेषमनुपादाय सामान्यानुष्ठानानुपपत्तेराकांक्षितो वि
शेषस्तेजो वै घृतमिति वाक्यशेषगतो गृह्यते॥ अन्ये तु॥ अलाभे वा निषेधे वा काष्ठानां दंतधावनं॥ पर्णादिना वि
शुद्धेन जिह्वोल्लेखः सदैव चेति॥ पैठीनसिवचनात् लाभे॥ दंतकाष्ठानां निषिद्धायां तथा तिथौ॥ अपां द्वादशगंडू
षैर्विदध्याद्दंतधावनं॥ इति व्यासवचनाच्च जिह्वोल्लेखनदंतशोधने कार्ये॥ इत्यर्थवादगतो पि विशेषो विवक्षि
त इत्याहुस्तन्न॥ जिह्वोल्लेखनस्य दंतधावनत्वाभावाद्गौणोत्र दंतधावनव्यवहारः॥ ४॥ पादशरणे॥ सर्वगंडूषाणां ३६
मुखांतरगतसर्वावयवशोधकत्वेनात्र दंतधावनपदप्रयोगे पि दंतधावनमात्रधावके एव लोके दंतधावनव्यव

हारादेस्तन्निषेधाउसंकटेवानुष्ठानाचारणात्काष्ठेतरेणनिषिद्धचूर्णादिनापत्रेणवादंतमार्जनमकार्यमेव॥यदि
तुपेरीनसिवाक्यंदंतधावनशास्यमुख्यार्थत्वंचअस्यसमुच्चयार्थकत्वंतर्हिअन्योक्तमेववरम्॥यत्तु॥स्त्रिया
इतिप्रकृत्य॥पुष्पालंकारवस्त्राणिगंधधूपानुलेपनं॥उपवासेनदुष्यंतिदंतधावनमंजनं॥इतिव्यासोक्तं॥तत्सभ
र्तृकाणांभर्तृसमीपवर्तिनीनांवनितानांवेदितव्यं॥स्मृत्यंतरेच॥नेत्रांजनंसतांबूलंसिंदूरंरक्तवाससी॥बिभृया
त्सोपवासापिसर्वदाभर्तृवृद्धये॥अत्रकाम्योपवासवाक्येषु॥बहुविधाःनियमाःदृश्यंते॥तेचविस्तरभयान्नलि
ख्यंते॥इत्यस्यतोऽवसेयाः॥तेचकाम्यकर्मस्वत्रावश्यमपेक्षिताः॥तत्रसर्वांगोपसंहारनियमात्॥नित्यकर्मणि
तुयथाशक्तिकुर्यात्तथाकुर्यादिति॥इतिविज्ञायकुर्वीतावश्यमेकादशीव्रतं॥विशेषनियमाशक्तोहोरात्रंभुंजि
वर्जितः॥२॥इतिमाधवीये॥ब्रह्मवैवर्तात्॥किंच॥प्रधानस्योपवासस्याप्यसामर्थ्येप्रदेकनक्तादीनिविधीयते
॥तदेतिकर्तव्यतासुकाकथा॥तथामार्कंडेयः॥एकभक्तेननक्तेनतथैवायाचितेनच॥उपवासेनदानेननन
र्द्वादशिकोभवेत्॥स्मृत्यंतरेच॥उपवासेत्वशक्तानामशीतेरूर्ध्वजीविनां॥एकभक्तादिकंकार्यमाहबौधायनो
मुनिः॥३॥एकभक्तादिकमुक्तं॥अत्राप्यशक्तावनुकल्पमाह॥कात्यायनः॥पितृमातृभ्रातृरर्थेआचार्यार्थेविशे

नि॰सु॰ वतः॥ उपवासं प्रकुर्वाणः पुण्यं प्राप्नोत्यनुत्तमं लभेत्॥२॥ यमुद्दिश्य कृतः॥ सोपि संपूर्णफलमाप्नुयात्॥ इत्यादि प्र
तिनिधयोऽस्मृतौ ज्ञेयाः॥ एवं॥ कांस्यं मांसं मसूरं च क्षौद्रं चानृतभाषणं॥ पुनर्भोजनमत्याशं दशम्यां परिवर्जये
त्॥ इति स्कांदोक्तेः॥ कांस्यं मांसं मसूरां क्षौद्रं तैलं वितथभाषणं॥ व्यायामं च प्रवासं च मैथुनं तिलपिष्टं मसूरं च द्वा
३१ दश्यादिषु वर्जयेदिति मात्स्योक्तेः॥ अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः॥ अवनीतल्पशयनाः प्रियासंगवि
वर्जिताः इति दशमीकृत्यं नारदीयोक्तेः॥ दशम्यामेकभक्तं तु कुर्वीत नियतेंद्रियः॥ आचम्य दंतकाष्ठं तु खादे
द्दंतदनंतरं॥ इत्यादि स्मृत्यंतरोक्तं च नियमजातं काम्यव्रतपरमेव॥ हवेदोदात्तवाक्यात्॥ सायमाद्यंतयोरह्नोः सा
यं प्रातश्च मध्यमे॥ उपवासफलं प्रेप्सुर्जह्याद्भक्तचतुष्टयं॥ अथ नित्योपवासी चेत्सायं प्रातर्भुजिक्रियां॥ वर्जयेन्म
तिमान्विप्रः संप्राप्ते हरिवासरे॥ इति विष्णुरहस्यवचनाच्च॥ भोजनप्रतिषेधमात्रे तु भोजनवर्जनमात्रमिति कर्त
व्यतान्यत्॥ एतानि नैव हि व्रतनिषेधपरिपालनस्याविरोधः॥ यद्व्रते सत्यां श्रुतौ नियमपरिपालनं॥ इतरत्र नेति॥
अत एव कृत्स्नामासगृहस्थानां व्रतनिषेधेपि भुजिवारणरूपनिषेधपरिपालनमप्रसक्तोपवासनिषेधे तु किं विघ्नं स्यात्प्र ३१
त्यर्थे हि तिसंगतं॥ अत एवान्नमाश्रित्य मितिष्ठंति निंदावाक्यगतोऽन्नशब्दोऽशनीयपरो न पचेदन्नमात्मन इति वत्॥

अयं च निषेधः॥ कलंजभक्षणादिनिषेधवन्नित्य एव॥ व्रतं तु संयोगपृथक्त्वन्यायेन नित्यं काम्यं च॥ तथा च नयोरे
कत्र वृत्तस्यापि निषेधस्य व्रतानुष्ठानेनैव सिद्धिः॥ पूर्वतिथिग्रहणनियामकानां वाक्यानां विहितकर्मविशेषविषयक
त्वदर्शनेन व्रतमात्रविषयत्वात्॥ निषेधमात्रपरिपालनमात्रिकायां भोजननिवृत्तौ न तेषां प्रवृत्तिः॥ किंतु॥ यावत्येका
दशी तावत्यां न भोक्तव्यं॥ तिथिमात्रसंबंधेन एकादश्यां न भुंजीत इत्यादिनिषेधप्रवृत्तेः॥ निषेधस्तु निवृत्त्यात्मा॥ काल
मात्रमपेक्षते॥ इति देवलोक्तेश्च॥ निर्णयसिंधौ तु॥ दशम्यां एकादशी द्वष्टो व्रते पि एकादशीमारभ्य न भोक्तव्यं देवल
वचनादेव इत्युक्तं॥ श्राद्धे तु॥ अन्नाघ्राणं कर्तव्यं॥ मातापित्रोः क्षयेप्राप्ते भवेदेकादशी यदा॥ अभ्यर्च्य पितृदेवांश्च
आजिघ्रेत् पितृसेवितं॥१॥ उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्॥ उपवासं तदा कुर्यादाघ्राय पितृसेवितं॥२
॥ इति वचनाभ्यां॥ अत्र व्रतलोपे जापस्यादिकमन्यवद्द्रष्टव्यं॥ कायिकादिनियमरूपांगलोपे तु॥ तत्तारतम्ये
न तस्य प्रायश्चित्तार्थं सकृदसकृद्वा तन्मंत्रजपः॥ यथाह विष्णुधर्मेषु॥ शारीरमंतःकरणोपघातं वाचश्च विष्णुर्भगवानश
शेषं॥ शामं नयत्वस्तु ममेह शर्म पायादनंतो हृदि संनिविष्टः॥१॥ अंतःशुद्धिं बहिःशुद्धिं शुद्धो धर्मनयोऽच्युतः॥ सकरो
त्वमलेतस्मिन् प्रविशेत् यः स्मिन् सर्वदा॥२॥ वाक्योपघातान् मम घोषो धांश्च भगवानजः॥ शामं नयत्वमेयात्मा विष्णुश्रुतसि

षतः॥ उपवासं च कुर्वाणः पुण्यंशतगुणं लभेत्॥२॥ यमुद्दिश्य च कृतः॥ सोपि संपूर्णफलमाप्नुयात्॥ इत्यादिवु
तिनिषेधोऽन्यतो ज्ञेयः॥ एवं॥ कांस्यं मांसं मसूरं च क्षौद्रं चानृतभाषणं॥ पुनर्भोजनमत्याशं द्यूतमायासं परिवर्जये
त्॥ इति स्कांदोक्तं॥ कांस्यं मांसं सुरां क्षौद्रं तैलं वितथभाषणं॥ व्यायामं च प्रवासं च मैथुनं तिलपिष्टं मसूरं च द्वा

स्यादिषु वर्जयेदिति मात्स्योक्तं॥ अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः॥ अवनीतल्पशयनाः प्रियासंगवि
वर्जिताः इति दशमीव्रतस्य नारदीयोक्तं॥ दशम्यामेकभक्तं तु कुर्वीत नियतेंद्रियः॥ आचम्य दंतकाष्ठं तु खादे
दन्तदनंतरं॥ इत्यादिस्मृत्यंतरोक्तं च नियमजातं काम्यव्रतपरमेकं॥ हेवौदाहृतवाक्यात्॥ सायमाद्यंतयोरह्नोः सा
यं प्रातश्च मध्यमे॥ उपवासफलप्रेप्सुर्जह्याद्भक्तचतुष्टयं॥ अथ नित्योपवासी चेत्सायं प्रातर्भुजिक्रियां॥ वर्जयेन्म
तिमान्विप्रः संप्राप्ते हरिवासरे॥ इति विष्णुरहस्यवचनाच्च॥ भोजनप्रतिषेधमात्रे तु भोजनवर्जनमात्रमिति कर्त
व्यतामूल्यं॥ एतावानेव हि व्रतनिषेधपरिपालनयोर्विशेषः॥ यद्व्रते सत्यां प्राप्तौ नियमपरिपालनं॥ इतरत्र नेति॥
अतएव कृष्णाकगृहस्थानां व्रतनिषेधेऽभुजिरूपनिषेधपरिपालनमस्त्यौपवासनिषेधे तु किं विद्वत्स्येव 
ऽस्येति संगतं॥ अतएवाल्पमाम्निम्यपिष्ठंती लिंनिंदावाऽन्यतोऽलमत्राद्योऽधमी यथा रोनप्रवेदल्पमात्मन इति वत्॥

अयं च निषेधः॥ कलंजभक्षणादिनिषेधवन्नित्य एव॥ व्रतं तु संयोगपृथक्त्वन्यायेन नित्यं काम्यं च॥ तयोर्भयोरे
कत्र व्रतस्य निषेधस्य व्रतानुष्ठानेनैव सिद्धिः॥ पूर्वे तिथिग्रहणनियामकानां वाक्यानां विहितकर्मविशेषविषयक
त्वदर्शनेन व्रतमात्रविषयत्वात्॥ निषेधमात्रपरिपालनात्मिकायां भोजननिवृत्तौ न तेषां प्रवृत्तिः॥ किंतु॥ यावत्स्येका
दशी तावत्स्यां न भोक्तव्यं॥ तिथिमात्रसंबंधेन एकादश्यां न भुंजीतेत्यादिनिषेधप्रवृत्तेः॥ निषेधस्तु निवृत्त्यात्मा॥ काल
मात्रमपेक्षते॥ इति देवलोक्तेश्च॥ निर्णयसिंधौ तु॥ दशम्यां एकादशी वर्तते यत्र अपि एकादशीमारभ्य न भोक्तव्यं देवल
वचनादेव इत्युक्तं॥ श्राद्धे तु॥ अन्नाघ्राणं कर्तव्यं॥ मातापित्रोः क्षयेप्राप्ते भवेदेकादशी यदा॥ अभ्यर्च्य पितृदेवांश्च
आजिघ्रेत् पितृसेवितं॥१॥ उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्॥ उपवासं तदा कुर्यादाघ्राय पितृसेवितं॥२
॥इति वचनाभ्यां॥ अत्र व्रतलोपे प्राजापत्यादिकमन्यवद्द्रष्टव्यं॥ कायिकादिनियमरूपांगलोपे तु॥ तत्तारतम्ये
न तत्प्रायश्चित्तार्थं सकृदसकृद्वा तन्मंत्रजपः॥ यथाह विष्णुधर्मेषु॥ शारीरमंतःकरणोपघातं वाचश्च विष्णुर्भगवाम
शेषं॥ शमं नयत्वस्तु ममेह शर्मपायादनंतो हृदि संनिविष्टः॥१॥ अंतः शुद्धिं बहिः शुद्धिं शुद्धो धर्मनयोच्युतः॥ सकरो
त्वमलेतस्मिन् शुचिरेवास्मि सर्वदा॥२॥ वार्त्तोपघाता नमधो वा धांश्च भगवानजः॥ शमं नयतु मे यात्माविष्णुश्चेतसि

| | | |
|---|---|---|
| चं | १० | ६० |
| मं | ११ | ६० |
| बु | ११ | १ |
| बृ | १२ | २ |

शै०७ अत्र बुधे उपवासः इत्येके ॥ भौमे इत्यन्ये ॥ स्कांदे ॥ पूर्णाप्येकादशी त्याज्या वर्द्धते द्वितयं यदि ॥ तथा
॥ अविद्धापि च विद्धा स्यात्परतो द्वादशी यदि ॥ २ ॥ भृगुनारदौ ॥ संपूर्णैकादशी यत्र प्रभाते पुनरेव सा
२९ ॥ तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ॥ परतस्त्रयोदशपाम् ॥ संपूर्णैकादशी यत्र प्रभाते पुनरेव सा
॥ सर्वैरेवोत्तरा कार्या परतो द्वादशी यदीति च नारदः ॥ ३ ॥ न चैतादृशानि वैष्णवविषयाणीति वाच्यं ॥
विनिगमका ॥ भावात् ॥ नहि वैष्णवानां विद्धात्यागवत् ॥ शुद्धहानत्यागे एतादृशवाक्यादतिरिक्तं प्रमाणमस्ति ॥ येन त
दैकार्थत्वार्थमीदृशवाक्यान्यपि तद्विषयाणि स्युरित्येके ॥ अन्ये त्वेतेषु वाक्येषु पूर्णत्वं च सूर्योदयादारभ्य प्रवर्त्तमान
त्वं ॥ न त्वरुणोदयादारभ्य प्रवर्त्तमानत्वं ॥ अप्रसिद्धत्वात् ॥ ० ॥ १ ॥ ० ॥ अरुणोदयवेधवाक्यानां वैष्णवविष
ये उपसंहारस्य दर्शितत्वेन सामान्यशास्त्रार्थव्यवस्थापकत्वानुपपत्तेश्चेति वैष्णवान्यनीयं विद्धैव ॥ इति दशमी
शेषसंयुक्तेति गरुडवचनेनेमानि वचनान्येकार्थकानीति स्मार्तानां पूर्वत्यागे मानाभावः ॥ न चैवमेषां वैपर्थ्यं
॥ ग्रंथांतरस्य स्वग्रंथांतरस्येनावैपर्थ्यात् ॥ उपसंहारकेणोपसंह्रियमाणानां गतार्थत्वेप्यदोषाच्च ॥ एतदेक २९
वाक्यतयैवाविद्धापि चेति स्कांदवाक्यमपि सूर्योदयेऽविद्धायां वैष्णवविषयम् ॥ अत एवोदाहरिष्यमाणे ॥ पुनः

प्रभातसमयेइत्यादिवसिष्ठवाक्ये॥ परतोद्वादशीनचेदितिद्वितीयश्लोकद्वितीयपादः संगच्छते॥ नोचे
त्परतोद्वादश्यांसत्यामपि॥ तेषांपरस्यैवतुतस्यसत्वेनायंपादोनसंगच्छेत॥ इतिस्मार्तैः पूर्वैवोपोष्या॥ सामा
न्यवाक्येष्वप्येवमाहुः॥ ॥अथाधिकानधिकद्वादशीकार्यथा॥ गृहिणांमोमे॥ इतरेषांविधवानांचवृद्धेरुप

| | | |
|---|---|---|
| ३ | १० | ९ |
| ५ | ११ | ६० |
| ७ | १२ | १ |
| ८ | १३ | ५५ |

वासः॥ नारदः संपूर्णैकादशीयत्रद्वादश्यांवृद्धिगामिनी॥ द्वादश्यांलंघनंकार्यंत्रयोदश्यांतुपारणं॥ स्कंदे॥
प्रथमेहनिसंपूर्णाव्याप्याहोरात्रसंयुता॥ द्वादश्यांतुतथातातदृश्यतेपुनरेवच॥१॥ पूर्वाकार्यागृहस्थै
स्तुयतिभिश्चोत्तराविभोइति॥ सर्वैरेवोत्तराकार्याइत्युदाहृतवाक्येसर्वपदोपादानादुभयाधिक्ये
॥ ॥ ॥ ॥ सकामानांनानेनवाक्येनपूर्वैकादशीव्रतविधानं॥ अत्रगृहस्थपदंयतिपदंस
काममनिष्कामपरे॥ अतएवनिष्कामस्तुगृहीकुर्यादुत्तरैकादशीव्रतं॥ प्रातर्भवंतुवामावाद्वादशीचद्विजोत्तम॥
॥२॥ इतिस्कांदे॥ एवंनिष्कामगृहिणोपिउत्तरत्रोपवासोविहितः॥ एवंचवनस्थादेरपिसंग्रहोभवति॥ अतए
व॥ पुनःप्रभातसमयेघटिकैकायदाभवेत॥ अत्रोपवासोविहितोवनस्थस्ययतेस्तथा॥१॥ विधवायाश्चतत्रै
वपरतोद्वादशीनचेत॥ इति[illegible]सिद्धः॥ इदृत्रास्कांदादिवाक्येकवाक्यतयासंपूर्णैकादशीयत्रद्वादश्यांनिस्तु

श्री·मु· क्तनारदवचनमपि निष्कामपरं॥ यद्वा॥ नारदवचनमनुन्याधिक्यपरं॥ उदाहृतस्कांदादिवाक्यैकवाक्यत्व
लाभात्॥ ईदृशबहुविधवचनानुरोधादेव तु॥ एकादशी विद्धा चेत्तस्मिन्केऽक्षमे विशेषतः॥ उत्तरां तु यतिः
५० कुर्यात्पूर्वामेव सदा गृहीति स्कांदवाक्ये निष्कामपदं निर्गतीति विष्णुप्रीअतिरिक्तः कामो येषामिति व्युत्पत्त्या वैष्ण
वविषयं॥ वैष्णवगृहस्थस्यापि गृहस्थत्वेन स्कांदादिवाक्यैः॥ पूर्वव्रतप्राप्तौ पूर्वमुत्तरविधानं संगच्छते॥ एवं च गृ
हस्थपदयतिपदयोर्द्वयोर्न लक्षणा॥ एतदनुसारेणैवेतरवचनव्यवस्थापि बोध्या॥ एवं च वसिष्ठवाक्यस्थपूर्व्या
दिपदानि वैष्णवपराणीत्यपि केचित्॥ विष्णुप्रीतिकामैः स्मार्तैस्तु द्वे तिथी उपोष्ये॥ तदाह वृद्धवसिष्ठः॥ संपूर्णैका
दशी यत्र प्रभाते पुनरेव सा॥ लुप्यते द्वादशी तत्र उपवासः कथं भवेत्॥१॥ उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्प
रैः॥ स्कांदे तु॥ संपूर्णैकादशी यत्र प्रभाते पुनरेव सा॥ त्रयोदशी उषःकाले उपोष्या तत्र का भवेत्॥ उपोष्ये द्वि ति
थी तत्र विष्णुप्रीणनतत्परैरित्यत्र उषःकालशब्दो द्वादश्याल्पमाधिक्योपलक्षकः॥ अत्र एकाधिकारिकत्वे
पि वाचनिकी वृत्तावृत्तिः॥ अत एव दशावचनानां साफल्यं एतेन सकामनिष्कामयोः॥ पृथक्व्रतं विधाय कामि ५०
दं भिन्नाधिकारिकं वचनांतरैकवाक्यत्वलाभात्॥ अन्यथा॥ आवृत्तेरयोगादिति वस्तुक्तं॥ शुद्धानधिकाऽधि

| | | | |
|---|---|---|---|
| र | १० | २७ | ५८ |
| मं | ११ | ५९ | ६० |
| बु | १२ | ५० | |
| बृ | १२ | २ | |

कद्वादशीकार्यथा॥ ॥भौमेउपवासः॥ नारदः॥ न चेदेकादशी विष्णो द्वादशी परतः स्थिता॥
उपोष्यैकादशी तत्र यदीच्छेत्परमं पदमिति विष्णुर्द्वादशी परतस्त्रयोदश्यां॥ अत्र चतुर्थपादोर्थवादः॥
अत एव स्कांदे॥ शुद्धा यदा समाहीना समाहीनाधिकोत्तरा॥ एकादशीमुपवसेत्न शुद्धां वैष्णवीमपि॥
इति सामान्यतो विधिनिषेधौ संगच्छेते॥ उत्तरा द्वादशी॥ अत एव॥ अविद्धापि चेति स्कांदवचनं॥
वैष्णवपरं॥ तादृशवाक्यैकवाक्यतालाभाच्च॥ एवं॥ एकादशी भवेत्पूर्णा परतो द्वादशी यदि॥ तदा ह्येकाद-
शीं त्यक्त्वा द्वादशीं समुपोषयेदित्यादिवाक्यान्यपि॥ संपूर्णैकादशी त्याज्या परतो द्वादशी यदि॥ उपोष्या द्वादशी
शुद्धा द्वादश्यामेव पारणं॥२॥ इति भागवततंत्रपठितत्वाद्वैष्णवविषयमेव॥ अत एव न चेदेकादशी विष्णावि-
त्युदाहृतवाक्यविरोधो न॥ एवमन्यान्यपि॥ एकादशी शुद्धत्वे शुद्धद्वादशीव्रतविधायकानि वाक्यानि वैष्णवपर-
त्वेन व्याख्येयानि॥ यत्तु॥ पृथ्वीचंद्रोदये बृहन्नारदीये॥ संपूर्णैकादशी शुद्धा द्वादश्यां नैव किंचन॥ द्वादशी च त्र-
योदश्यामस्ति तत्र कथं भवेत्॥ पूर्वा गृहस्थैः कार्या स्यादुत्तरा यतिभिस्तिथिरिति॥ तत्तु अनाकरत्वादनादेयं॥
॥ शुद्धामधिकानधिकद्वादशीकार्यथा॥ ॥भौमेउपवासोऽसंदेहात्॥ शुद्धा यदा समेति स्कांदाच्च॥ विद्धाधिका

शै॰सु॰

| | | | |
|---|---|---|---|
| चं | १० | ६० | |
| मं | ११ | ५९ | घा ६० |
| बु | १२ | ६० | ५८ |
| बृ | १३ | ५५ | |

धिकद्वादशी कार्या ॥ सर्वेषां सोमे उपवासः ॥ कण्वः ॥ उदयोपरि विद्धा तु दशम्यैकादशी तिथिः ॥ दान
वेभ्यः ॥ प्रीणनार्थं दत्ता सा पाकशासनः ॥ २ ॥ उदयः सूर्योदयः ॥ उदयपदेन झटिति सुपस्थितेः ॥ दशम्याः
४१ शांतमादाय यत्रोदेति दिवाकरः ॥ तेन स्पृष्टं हरिदिनं दत्तं जंभासुरस्य तु ॥ इति स्मृत्यंतराच्च ॥ इमे वाक्ये स्मा
र्तविषये एव ॥ वैष्णवानां अरुणोदयवेधनिषेधावेश्यासः ॥ सामान्यवेधनिषेधवाक्यान्यपि वैष्णवे
षु दशम्या वेधेऽपि प्रवर्तत एव ॥ विनिगमनाविरहात् ॥ ॥ विद्धाधिकानधिकद्वादशी कार्या ॥
अत्रापि गृहिणां सोमे उपवासः ॥ गृहिणां तु नोपवासः ॥ किंतु सोमे नक्तं ॥ पद्मपुराणे ॥ द्वादशी मिश्रि
ता कार्या सर्वत्रैकादशी तिथिः ॥ द्वादशी च त्रयोदश्यां विद्यते यदि वा न वा ॥ १ ॥ तथा ॥ सर्वत्रैका
दशी प्राप्या द्वादशी मिश्रिता नरैः ॥ प्रातर्भवतु वा मा वा यतो नित्यमुपोषणमिति ॥ त्रयोदश्यां द्वादशी सत्त्वेऽसत्त्वे च
कादशी द्वादशी मिश्रितैव कार्या ॥ व्रतस्य मुख्यत्वेन त्रयोदश्यां सत्त्वस्य व्रताप्रयोजकत्वादिति समुदायार्थः ॥ नारदः
द्वादश्येकादशी यत्र संगता त्रिदशाधिप ॥ तामुपोष्य ततः कार्यं त्रयोदश्यां तु पारणं ॥ २ ॥ परतः एकादशी कला याऊ ४१
र्ध्वं ॥ इमामि द्वादश्याः ॥ सूर्योदयपर्यंतत्वे तदुपास्तोमानानि ॥ ततो न्यूनत्वेऽपि सैवोपोष्या ॥ तथा च कूर्मपुराणे ॥ ॥

| | | | |
|---|---|---|---|
| चं | १० | २ | ०५५ |
| मं | ११ | ३ | |
| बु | १२ | ३ | |
| बृ | १३ | ४ | |

एकादशीद्वादशीचरात्रिशेषेत्रयोदशी ॥ तत्रक्रतुशतंपुण्यंत्रयोदश्यांतुपारणं ॥ १ ॥ स्कांदः ॥ एकादशीद्वाद
शीचरात्रिशेषेत्रयोदशी ॥ सोपोष्याचप्रयत्नेनमहापुण्यविवर्द्धनी ॥ १ ॥ इति ॥ अत्रैकेद्विविधेपिक्षयेपुत्रव
द्गृहिणांनक्तं ॥ नतूपवासः ॥ तथाचकौर्मे ॥ एकादशीद्वादशीचरात्रिशेषेत्रयोदशी ॥ उपवासंनकुर्वीतपुत्र
पौत्रसमन्वितः ॥ वृद्धशातातपः ॥ एकादशीयदाविद्धाद्वादशीचक्षयंगता ॥ क्षीणासाद्वादशीज्ञेयानक्तंतत्रवि
धीयते ॥ २ ॥ पुत्रिणांइतिशेषः ॥ उक्तवाक्यानुरोधात् ॥ अतएव ॥ एकादशीकलाप्यत्रद्वादशीचक्षयंगता ॥ तत्र
नक्तंप्रकुर्वीतनोपवासंगृहाश्रमी ॥ इत्यपिपुत्रिविषयमेवेत्याहुः ॥ कौर्मेस्यपुत्रपौत्रसमन्वितइतिपदस्योप
तापरत्वेनगृहिबोधकं ॥ एतदनुरोधादितितुयुक्तम् ॥ क्षयश्रवणाविशेषात् ॥ सूर्योदयात्प्राक्निवृत्तिरूपस्त
त्पर्यंतत्स्वरूपक्षयस्य ॥ एवंचपारणाहेनलभेतइत्यादिवक्ष्यमाणवाक्यान्युभयानाधिक्यविषयाण्येव ॥ ॥

| | | | |
|---|---|---|---|
| बु | २० | १ | |
| म | द्वा | ६० | |
| गु | द्वा | १ | |
| ह | १३ | | |

विद्धानधिकद्वादशीकायथा ॥ ॥ सर्वेषांसोमेउपवासः ॥ एकादशीयदेतिवक्ष्यमाणपाद्मात् ॥
बृहन्नारदीये ॥ एकादशीयदाविद्धाद्वादश्यांनवतीयते ॥ द्वादशीचत्रयोदश्यामस्तितत्रकथंभवे
त् ॥ १ ॥ उपोष्याद्वादशीतत्रसर्वैरेवनसंशयः ॥ एतदनुसारेणैव ॥ एकादशीयदानुष्ठापरतोद्वा

।सु। दशीनवेत॥ उपोष्याद्वादशीतत्रयदीच्छेत्परमांगतिमितिव्यासवाक्येचतुर्थपादोर्थवादः॥ सर्वेषांपरत्रोपवासस्यै
वेष्टत्वात्॥ एकादशीनिमित्तोप्युपवासोवचनबलादेवद्वादश्यांयतोनास्तिवचनस्यातिभारः॥ इत्याहुरत्रेदंबोध्य।
२ मिदंवचनद्वयंवैष्णवविषयं॥ सर्वैरित्यस्यसकामैर्निष्कामैश्चेत्यर्थः॥ एकादशीयदाविद्धापरतोपिनवर्द्धते॥ य
तिथिर्गृहिभिश्चैवसेवोपोष्यात्वयेतिथिरितिपाद्मे॥ द्वयेसामान्यतोदशमीविद्धायामुपवासस्यविधानात्॥ नचे॥ दा
त्तवाक्यद्वयानुसारेणेदमुन्नयानाधिक्यपरमेवास्त्वितिवाच्यं॥ एतदनुसारेणैतयोर्वैष्णवविषयतायाएववक्तु
मुचितत्वात्॥ नचात्रविनिगमकाभावः॥ विनिगमकान्तराभावेपिशिष्टसंप्रदायस्यविनिगमकत्वात्॥ नच॥ दिनत्र
यमृतेदेविनोपोष्यादशमीयुता॥ सैवोपोष्यासदापुण्यापरतश्चेत्त्रयोदशी॥ इतिस्कांदवचनेकार्ष्ण्यादिवास्योभयानाधि
क्यपरत्वं॥ इतिवाच्यम्॥ द्विस्पृगेकादशीयत्रतत्रसंनिहितोहरिः॥ तामेवोपवसेत्काममकामोविष्णुतत्परः॥ इति
कूर्मपुराणवचनेकार्ष्ण्यंनास्यवैष्णवविषयत्वात्॥ ईदृशविषयेवैष्णवानामपिवचनादेवदशमी।विद्धोपवास
स्यवक्तुमुचितत्वात्॥ इति॥ एवंचयदिदैवात्तुसंसिद्ध्येदितिवक्ष्यमाणेनारदवचनंस्कांदादिवाक्यानिचतद्वि ५२
याणि॥ अतएव॥ एकादशीनलभ्येतस्याद्युदाहरिष्यमाणेकृष्णशृंगादिवाक्येपुनसंकोचः॥ उत्तरत्रतुवैष्ण।

वविषयकाण्यपिवाक्यानितत्रातिविरोधाभावादुदाहरिष्यंते॥ ॥विद्धानधिकानधिकद्वादशीयथा॥ ॥

| | | | |
|---|---|---|---|
| बु | १० | १ | ८५८ |
| मं | १२ | ५५ | व ५८ |
| बु | १३ | ५७ | |

सर्वेषांसोमेउपवासः॥स्कांदे॥विद्धाप्यविद्धाविज्ञेयापरतोद्वादशीनचेत्॥इति॥पारणांद
नलभ्येतद्वादशीकलयाऽपिचेत्॥तदानींदशमीविद्धाप्युपोष्यैकादशीतिथिरितिवाक्यांतरं
पद्मपुराणे॥एकादशीदशाविद्धापरतोपिनवर्द्धते॥यातात्रिगेहिभिर्ज्ञैवसेवोपोष्यासदेति
थिरिति॥नवर्द्धतइतिसाम्याभिप्रायेण॥न्यूनइतिन्यूनताभिप्रायेण॥यद्यपिचात्रएकादश्याएवअनाधिक्य
मुक्तं॥तथापिद्वादश्याअपितद्बोध्यं॥दिनत्रयमस्पृष्टेदेविनोपोष्यादशमीयुता॥सेवोपोष्यासदापुण्यापरतश्चे
त्रयोदशीतिस्कांदात्॥अतएव॥यदितुदैवात्संसिद्ध्येदेकादश्यांदिनत्रयं॥तत्रक्रतुशतंपुण्यंद्वादशीपारणेभ
वेत्॥इतिनारदवचनं॥त्रिस्पृगेकादशीयत्रतत्रसंनिहितोहरिः॥तामेवोपवसेत्कामनकामोविष्णुतत्परः॥ १॥
इतिकूर्मपुराणवचनंचोन्नयानाधिक्यपरं॥एकादशीयदाविद्धेतिद्वादश्याधिक्यपरोपवासविधानेनतयोर्बा
धाच्च॥एवमस्मिन्नवाक्यद्वयेपिबोध्यं॥दशमीद्वादश्योःस्पृष्टत्वातीतित्रिस्पृक॥दिनत्रयमस्पृष्टेइतिस्कांदानुसारा
त॥दिनत्रयमस्पृष्टेइत्यादिवचनत्रयंविद्धन्यूनायामुपवासेमानं॥साम्येपिसेवोपोष्या॥एकादशीनलभ्येतसक

नाद्वादशी भवेत्॥ उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत्॥ २॥ इत्यादिऋष्यशृंगादिवचनेभ्यः॥ अविद्धानि
निविद्धेश्वेतनलग्नयंत्रदिनानि तु॥ मुहूर्तैः॥ पंचभिर्विधा॥ ग्राह्यैवैकादशी तिथिरिति च ऋष्यशृंगवचनात्॥ अत्र
५२ मुहूर्तपंचकमरुणोदयमारभ्य बोध्यं॥ अन्यथा परत्रैकादश्या अवश्यंभावेनाऽविद्धाऽलाभाभावात्॥ इमानि वा
क्यानि॥ पुत्रवद्गृहस्थातिरिक्तविषयाणि॥ सपुत्रगृहिणां तु उत्तरत्रोपवासः॥ एकादशीदिनक्षये उपवासं करोति यः॥
तस्य पुत्रा विनश्यंति मघायां पिंडदो यथा॥ एतदेकवाक्यतयैव॥ एकादश्यां प्रयदा वत्स दिनक्षयतिथिर्भवेत्॥ अत्रो
पोष्या द्वादशी स्यात्त्रयोदश्यां तु पारणमित्यादिवाक्यान्यपि सपुत्रगृहिविषयाणि॥ सपुत्रगृहिकृत दशमीवेधनि
षेधसहचरितद्वादशीव्रतबोधकानि॥ दिनक्षये तु संप्राप्ते उपोष्या द्वादशी भवेत्॥ दशमीशेषसंयुक्तां न कुर्वी
त कदाचनेत्यादिकूर्मपुराणादिवाक्यानि चैतादृशविषयाणि॥ पुत्रवद्गृहिणामप्युत्तरत्रोपवासो न्यूनत्वरूप।
क्षये एव बोध्यः॥ न तु साम्यरूपे॥ तथाह हेमाद्रौ भविष्ये॥ एकादशी कलाप्येका परतो न च वर्द्धते॥ गृहिभिः। पुत्र।
वद्भिश्च सैवोपोष्या नंदा तिथिरिति पूर्वत्रोपवासविधिः संगच्छते॥ परतो वृद्ध्यभावोक्तेः साम्ये तात्पर्यात्॥ अत ए ५२
व वाक्यांतरेण न विरोधः॥ मुमुक्षूणां तु साम्ये परैव॥ दशमीमिश्रिता पूर्वा पूर्णा तु द्वादशी परा॥ एकादश्यां महा

ध्यस्तु उपवासः कथं भवेत्॥ इत्युपक्रम्य॥ शुद्धैव द्वादशी राजन्॥ उपोष्या मोक्षकांक्षिभिरिति शिवरहस्ये
॥ तथाभिधानात्॥ पराह्णस्य पूर्वार्द्धे रात्रावपि विद्धा इत्यर्थः॥ सामर्थ्यात्॥ पारणदिने देवमभ्यर्च्य पूर्ववन्निवे
दने मंत्रः पठितव्यः॥ अज्ञानतिमिरांधस्य व्रतेनानेन केशव॥ प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भवेति॥ एतत्
च व्यासवचनं॥ त्रो वेस्तत्राउ करेत्सूहः कार्यः॥ तच्च पारणं॥ यदा पारणदिने द्वादशी भोजनापर्याप्ता तदा प्रा
त्कालीनं सकलं कृत्यमरुणोदये कृत्वा द्वादशीमध्य एव कर्तव्यं॥ तथा च स्कंदपुराणे॥ कलाद्वयं त्रयं वापि द्वा
दश्या यत्र दृश्यते स्नानार्चनादिकं कर्म तदा रात्रौ विधीयते पुनिरात्राविस्तुकेप्यरुणोदये एव कार्यं॥ तथा च ना
रदीये॥ अल्पायामथ विप्रेंद्र द्वादश्यामरुणोदये॥ स्नानार्चनक्रियाः कार्या जपहोमादिसंयुता इति पद्मपुरा
णेपि॥ यदा भवति स्वल्पा तु द्वादशी पारणादिने॥ उषःकाले द्वयं कुर्यात्॥ प्रातर्माध्याह्निकं तदेति॥ यस्य चाप
रूपकमरुणोदयाधिककालसाध्यं तेन तद्दिनसंख्यादिसंकोचेनाप्यावश्यकं कृत्वा द्वादशीमध्ये पारणं कर्तव्यं
॥ महाहानिकरी ह्येषा द्वादशी लंघिता नरैः॥ करोति धर्महरणमस्नातेव सरस्वतीति पद्मपुराणे॥ द्वादशीलंघने
दोषश्रवणात्॥ अस्नाते स्वधिकरणेक्त प्रत्ययः॥ तेन तस्यां स्नानमकृत्वा लंघिता सरस्वती यथा धर्मं हरति त

शै. सु. था॥ भोजनेन लंघिता द्वादश्युपवीस्यर्थः॥ तेन नद्यंतरे ऽपि तीर्थस्नानं॥ सरस्वत्यां तु स्नात्वो रणमिति सूचितं॥ यदा तु मृत
तिथिनिमित्तकं॥ गजच्छायायां वा ग्रहणाद्यन्यप्रयोगनिमित्तकं वा श्राद्धस्नानादिकं त्रयोदश्यां कर्तव्यं भवति॥
संकटांतरे या शास्त्रीयं॥ तदा ऽल्पद्वादशी मध्ये ऽद्भिः पारणं कृत्वा पश्चाच्छ्राद्धादि विधाय भोक्तव्यं॥ यदाह देवलः॥
४४ संकटे विषमे प्राप्ते द्वादश्यां पारयेत्कथं॥ अद्भिस्तु पारणं कुर्यात्पुनर्भुक्तेन दोषकृदिति॥ अत्र चाद्भिः॥ पारणमा
त्रं विधीयते॥ श्राद्धाद्यनपकर्षस्तु वचनाभावादेव सिद्धः॥ माध्याह्निकापकर्षस्तु भूयस्यामपि द्वादश्यां भवत्येव।
व॥ सर्वेषामुपवासानां प्रातरेव हि पारणेति माधवाद्धृतवचनात्॥ भोजनमाध्याह्निकयोश्च वाचनिकपौर्वा
पर्यसद्भावात्॥ यदा तु प्रातःकाले द्वादशी प्रथमपादव्याप्ता भवति॥ तदा तमतिलंघ्यैव पारणं कर्तव्यं॥ द्वादश्याः
प्रथमः पादो हरिवासरसंज्ञितः॥ तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः॥ इति विष्णुधर्मोत्तरात्॥ एतेषां च द।
शम्यादिनियमानामंगभूतानां लोपे प्रायश्चित्तं ग्रंथांतराद्दृष्टव्यं॥ विस्तरभयादिहास्माभिर्न लिख्यते॥ ॥
इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे एकादशीव्रतनिरूपणं नाम द्वाविंशः किरणः॥ २२॥ अथ प्र ४.
दोषव्रतं॥ ब्रह्मोत्तरखंडे॥ पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा॥ इत्युपक्रम्य धर्मगुप्तेतिहासरूपवर्ण्य॥

एवमन्ये समाराध्य प्रदोषे गिरिजापतिं॥ लभंते भीप्सितान्कामान्देहांते तु परां गतिं॥ तथा॥ एतन्महाव्रतं पुण्यं प्रदोषे
गिरिशार्चनं॥ धर्मार्थकाममोक्षाणां यदेतत्साधनं परं॥ अत्र त्रयोदशी प्रदोषव्यापिनी ग्राह्या॥ ततस्तु लोहिते भा
नौ स्नात्वा सनियमो व्रती॥ पूजास्थानं ततो गत्वा प्रदोषे शिवमर्चयेत्॥ इति स्कंदपुराणे तद्व्रतविधौ॥ प्रदोषस्य
शिवपूजनकालत्वोक्तेः॥ पूजाव्रतेषु सर्वत्र तत्कालव्यापिनी तिथिरिति नियमात्॥ तत्र पूर्वापरान्यतरदिने प्र
दोषव्याप्तौ तस्या एव ग्राह्या॥ दिनद्वये प्रदोषव्याप्तौ॥ साम्येन तदेकदेशस्पर्शे वा उत्तरा॥ प्रातः॥ संकल्पये
द्विद्वानुपवासव्रतादिकमित्युक्तसंकल्पकालमारभ्य सत्वात्॥ वैषम्येण तदेकदेशस्पर्शे तदाधिक्यवती पूर्वा
पि ग्राह्या॥ यदि देवपूजाभोजनपर्याप्तं तदाधिक्यं स्यात्॥ नो चेत्साम्यपक्षवदुत्तरैव॥ सायान्हरूपगौणकालव्या
प्तेरपि तत्र लाभात्॥ सायान्हस्य गौणत्वं तत्कालत्वं प्रदोषस्य त्रीभावे तत्र नक्तविधानादवगम्यते॥ तथा च स्कंदपु
राणे॥ प्रदोषव्यापिनी यस्यां दिवानक्तं विधीयते॥ आत्मनो द्विगुणच्छाया मंदीभवति भास्करे॥ तन्नक्तं नक्तमि
त्याहुर्न नक्तं निशि भोजनं॥ एवं ज्ञात्वा ततो विद्वान्सायान्हे तु भुजिक्रियां॥ कुर्यान्नक्तव्रती नक्तफलं भवति निश्चितं तथा मु
हूर्तोनं दिनं नक्तं प्रवदंति मनीषिणः॥ नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप॥ इति॥ भविष्यपुराणेपि॥ मन्द

शा॰सु॰ त्रदर्शनोर्द्ध्वकालस्य ग्रहं मन्ये द्युसुखामुख्यत्वं॥ पूर्वाह्णेऽस्य च गौणत्वमवगम्यते॥ दिनं नक्तं नक्तव्रतस्योप-
मित्यर्थः॥ नक्षत्रदर्शनादित्यत्र ऊर्ध्वमित्यध्याहारः॥ ज्ञाप्येति ल्यब्लोपे निमित्ता वा पंचमी॥ अत एव दिनद्वये-
पि प्रदोषस्पर्शाभावे परतरैव॥ संकल्पकालव्याप्तेश्च॥ न चात्रैकभक्तादिवन्मुख्यकालेऽनुष्ठानं॥ किंतु गौणका-
४५ ल एव॥ सायाह्ने तु भुजिक्रियामिति वचनात्॥ तत्पूर्वस्य च पूजादेरप्यपकर्षेण तत्रैव कर्तव्यत्वात्॥ प्रदोषका-
लश्च॥ त्रिमुहूर्तं प्रदोषः स्याद्भानावस्तंगते सति॥ सुज्ञो बोध्यः॥ अत्रत्य पूजादिप्रकारः ब्रह्मोत्तरखंडे सप्तमाध्याये द्र-
ष्टव्यः॥ ॥ इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे प्रदोषव्रतनिरूपणं नाम त्रयोविंशः किरणः॥ २३
॥ ॥ अथ शनिप्रदोषसोमप्रदोषसोमवारव्रतानि॥ तत्र तावत्स्कांदे॥ वृत्रादिंद्रस्य तरेषां देवानां च भयोत्पत्तौ बृ-
हस्पतिः श्रीशिवाराधनस्यैव तन्निवारकत्वेनोपदिष्टं॥ गुरोक्तेन विधानेन कीदृशेन व्रतेन च॥ आराधनीयो गौरी-
शोऽस्माभिर्जयकांक्षुकैः॥ तद्वदस्व करावार्य त्वं हि नः परमा गतिः॥ इति देवानां प्रश्नं श्रुत्वा ऽरत्ते बृहस्पतिर्वाक्यं
॥ कार्तिकादिषु मासेषु मंदवारे त्रयोदशी॥ विशेषाच्छुक्लपक्षे तु सर्वकामकरी शुभा॥ तस्यां प्रदोषसमये लिंगरूपी ४५
सदाशिवः॥ पूजनीयो हि देवेंद्र सर्वकामसमृद्धये॥ इत्युक्त्वा माध्याह्ने स्नानादिकं कृत्वा ग्रामाद्बहिः स्थितलिंगमा-

माच्छतगुणं स्मृतं॥ वाप्यां च्छतगुणं पुण्यमरण्यस्य च पूजने॥ वन्याच्छतगुणं प्रोक्तं लिंगे वै पर्वतस्थिते॥ पार्वताच्छ
तगुणं तपोवनसमाश्रिते॥ कान्यपादिसंस्थिते लिंगे पूजितं स्यादनंतकं॥ इति लिंगविशेषे फलविशेषमुक्त्वा शिव
पूजनादिप्रकारं वोक्ता॥ एवं यः कुरुते मर्त्यो [illegible] व्रतमुत्तमं॥ शनिवारेण संयुक्तं सोद्यापनविधिं नरः॥ आयुरा
रोग्यमैश्वर्यं पुत्रपौत्रमनंतकं॥ शनौ पूजयते नित्यं प्रसादात् शंकरस्य च॥ तस्मात्त्वमपि देवेश पूजयस्व सदाशिवं॥
शनिप्रदोषविधिना ध्रुवं पुत्रं विजेष्यसि॥ एवं निशम्य गुरुणा कथितं तदानीं॥ सिद्धोऽपि तेन विधिना गिरिशं प्रपूज्य
॥ लोकं प्रसंतमपि वदेत्यपतिं प्रवृद्धं तं तत्क्षणाद्गमयत्॥ तत्रैवोक्तं॥ ब्रह्मोत्तरखंडे॥ शिवपूजा सदा लोके हेतुः॥
स्वर्गापवर्गयोः॥ सोमवारे विशेषेण प्रदोषादिगुणान्विते॥ १॥ प्रदोषः [illegible] संबंधरूपः॥ इदं सोमप्रदोषमा
हात्म्य॥ परं॥ केवलेनापि ये कुर्युः॥ सोमवारे शिवार्चनं॥ न तेषां विद्यते किंचिदिहामुत्र च दुर्लभं॥ २॥ केवल्य
मुक्तप्रदोषराहित्यं॥ [illegible] शुचिर्भूत्वा सोमवारे जितेंद्रियः॥ वैदिकैर्लौकिकैर्वापि विधिवत्पूजयेच्छि
वं॥ ३॥ ब्रह्मचारी गृहस्थो वा कन्या वापि सभर्तृका॥ विभर्तृका वा संपूज्य लभते वरमीप्सितं॥ इति तत्रैव॥ सो
मवारे शिवं गौरीं पूजयस्व समाहिता॥ उपोषिता वा सुश्रोणी ताविरजां वरधारिणी॥ १॥ यतवाक् [illegible] मतिः

पूजां कृत्वा यथोचितां॥ ब्राह्मणान् भोजयित्वाथ शिवं सम्यक् प्रसादयेदित्युक्त्वा॥ अभिषेकपीठं पूजाद्रीनां पा
पद्मस्य साम्राज्यादिफलकत्वमुक्त्वा॥ होमेन सर्वकोशानां समृद्धिरूपजायते॥ सर्वेषामेव देवानां तुष्टिः संयमभो
जनात्॥ १॥ इत्यमाराध्य॥ शिवं सोमवारे शिवामपि॥ संयमभोजनं दिवा अभुक्त्वा प्रदोषे शिवं संपूज्य भोजन
मिति॥ ये सोमवारे स्वेच्छं हि दिवा कुर्वंति भोजनं॥ तान्यातयंतु नरके घतिघोरे सुयत्नतः॥ इति शिवरस्ये। करणे
दोषश्रवणात्तथा॥ निश्चयत्वेन कर्तव्यं॥ भोजनं सोमवारे॥ उपोषणाद्दिनान्यस्मिन् दिवसे नियमोत्थयं॥ इ
त्यादिश्रुतत्वेव यत्नादिपदश्रवणाच्च नित्यमिदं॥ ॥ इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे सो
मवारव्रतनिरूपणं नाम चतुर्विंशः॥ २४॥ ॥ अथ श्रीशिवरात्रिः॥ सा च कृष्णादिमासरीत्या फा
ल्गुनकृष्णचतुर्दशी॥ शुक्लादिरीत्या तु माघकृष्णचतुर्दशी॥ अत्र च शंभोर्लिंगमाविर्भूतमितीशानसंहि
तायामुक्तं॥ तथाहि॥ माघकृष्णचतुर्दश्यामादिदेवो महानिशि॥ शिवलिंगतयोद्भूतः कोटिसूर्यसमप्रभः॥ इ
तिपुराणांतरे तु॥ तस्मिन्दिने समुद्भान्तिः स तं विषं पीत्वा जीवोद्धारप्रयोजकव्रतम्। विचिकीर्षुः॥ श्रीशिवो
विषपानजातसंतापजीवानुकारी संविवेश मदोपोषिते देवैर्निशि जागरद्भिश्च तुर्यामं जलप्रसेकादिना प्रस

मितः॥ततस्तेभ्योजगादअस्यांनिरूपेवंसदोपोष्यजागृद्भिःसर्वैरहमर्च्योस्तेनरसर्वार्थसिद्धिंनेविष्यतिनो
चेन्महाहानिःस्यादितिस्थितं॥स्कांदेतु॥मार्गशीर्षेसमुद्भूतंलिंगंदेवैरस्यांरात्रावर्चितमितिस्थितम्॥अ
त्रकल्पभेदेनव्यवस्थाबोध्या॥शिवरहस्ये॥तस्मात्सर्वदेवर्षेमाघकृष्णचतुर्दशी॥शिवरात्रिःसमा
ख्याताशिवेयंत्रिपुरद्विषःइति॥माघग्रहणममांतमासेन॥स्कांदेपि॥माघफाल्गुनयोर्मध्येअसिताया
चतुर्दशी॥शिवरात्रिस्तुसाख्यातासर्वयज्ञोत्तमोत्तमेति॥शिवरात्रिव्रतंचोपवासपूजाजागरणरूपप्रधा
नत्रयसमुदायरूपं॥उपवासप्रभावेनबलादपिचजागरात्॥शिवरात्रेस्तथातस्यांलिंगस्यापिचपूजया॥
अक्षयाँल्लभतेभोगान्शिवसायुज्यमाप्नुयादिति॥नागरखंडे॥त्रयाणामविकलसंबंधात्॥क्वचिदुप
वासमात्रश्रवणंत्वितरयोरुपलक्षणं॥क्वचित्तुअशक्तंप्रत्यनुकल्पत्वेनैकस्यद्वयोर्वाश्रवणं॥अथवा
शिवरात्रिंचपूजाजागरणेर्नयेत्॥कश्चित्पुण्यविशेषेणव्रतहीनोपियःपुमान्॥जागरंकुरुतेतत्रसरुद्रसम
तांव्रजेदित्यादिषु॥अथवाशब्दश्रवणात्॥अत्रचतुर्दशी॥अर्धरात्रव्यापिनीग्राह्या॥तथाचनारदीये॥
॥माघमासस्यचतुर्दश्यामादिदेवोमहानिशि॥शिवलिंगात्समुद्भूतःकोटिसूर्यसमप्रभः॥तत्कालव्यापिनीग्राह्या

त्रो॰ सु॰ शिवरात्रिव्रते तिथिरिति ॥ तत्र परेद्युरेव निशीथव्याप्तौ दिनद्वये वा निशीथाव्याप्तौ परैव ॥ पूर्वेद्युः परेद्युर्वा महा
निशि चतुर्दशी ॥ व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद्व्रतं नर इति कृत्यरत्नोदाहृतवचनात् ॥ माघासिते भूतदिनं हि
८७ राजन्नुपैति योगं यदि पंचदश्या ॥ तयात्वयुक्तां न तु तां व्रती कुर्याच्छिवस्य रात्रिं प्रियकृच्छिवस्येति हेमाद्र्युदाहृतव
चनात् ॥ जययात्र योगस्य पापकर्षेण युक्ताभिस्तुतत्वात् ॥ पूर्वेद्युस्तु योदयपाव बहुरात्री ॥ व्याप्तिप्रतीतिः ॥ या तु पूर्वे
द्युरेव निशीथयोगिनी दिनद्वयेपि वा निशीथयोगिनी सा पूर्वैव ॥ तदुक्तं ॥ स्कांदे ॥ कृष्णाष्टमी स्कंदषष्ठी शिवरात्रि
चतुर्दशी ॥ एताः पूर्वयुताः कार्यास्तिथ्यंते पारणं भवेत् ॥ तथा ॥ जयंती शिवरात्रिश्च कार्ये भद्राजयान्विते ॥ तथा
॥ माघफाल्गुनयोर्मध्ये यासा शिवचतुर्दशी ॥ अनंगेन समायुक्ता कर्तव्या सा सदा तिथिरिति ॥ ननु पूर्वेद्युरेव नि
शीथयोगिनी तत्कालयोगात्पूर्वेति लिखितवचनेप्यपूर्वैवेत्युक्तं ॥ दिनद्वये तद्योगिनी तु परेद्युर्योगिनी तु परैवकः ॥
प्रदोषनिशीथोभयव्याप्तिलाभात्संकल्पकालमारभ्य सत्वादहोरात्रोभययोगाच्च परैव युक्ता ॥ न तु पूर्वा ॥ अत एव ॥
माधवेनापि निशीथव्यापिनी पूर्वैव ग्राह्येत्युक्तं ॥ तिथितत्वेप्येवमेव ॥ तत्कथं पूर्वेद्युरेवेत्युच्यत इति चेत् ॥ उच्यते ॥ ८७
अर्द्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत् ॥ पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रियैरिति पद्मपुराणवचनमीदृशा

एवविषये पूर्वविद्धाविधानार्थं॥ अंततः सर्वा एव पि पूर्वविद्धाविधायकानि त्वागुक्तानि वाक्यानि॥ महतामपि
पापानां दृष्टावेभिः कृतिः पुरा॥ नदृष्टा कुर्वतां पुंसां कुहूयुक्तां तिथिं क्षिमामिति स्कंदपुराणीये मावास्यायुतानिषेधश्चेतादृश
विषय एव सार्थकः॥ यत्रोभयत्र निशीथयोगे॥ पूर्वा ग्राह्य एतस्य माघकृष्णस्य चतुर्दश्या मिति॥ पूर्वोदाहृतनारदी
यवचनेन पूर्वं [illegible] इति [illegible] स्कंदपुराणवचनेन च सिद्धत्वात्॥ एवं सति तत्र पूर्वोक्तवचनाना
मानर्थक्यात्तानि दिनद्वये निशीथव्याप्त्या पूर्वस्याग्राह्यत्वं प्रतिपादयंति॥ किंच॥ अर्धरात्रात्परस्ताच्चेदिति
वचने पूर्वविद्धे वस्यैवकारादुत्तरविद्धानिवर्तकात् उत्तरविद्धायाः प्रसक्तिर्गम्यते॥ सा चोभयत्र निशीथयोगे एव सं
भवति॥ न तु पूर्वत्रैव निशीथयोगे॥ तस्मादुभयत्र निशीथयोगेऽपि पूर्वैवेति॥ स्कंदपुराणे॥ आदौ मार्गत्रिरेमा
सिरीयोत्सवदिने पिवा॥ पृह्लीयान्माघमासे वा द्वादशाब्दं वसुपोषयेदित्यादिवचनैः प्रतिमासकृष्णचतुर्दशीषु॥ पू
जोपवासजागरणात्मकं काम्यं शिवरात्रिव्रतं विहितं॥ तस्यापि रात्रौ प्रतियामं पूजाजागरणस्य च विधानात्सक
लरात्रिसाध्यत्वात् बहुरात्रिव्यापिनीत्यग्राह्या॥ दिनद्वये रात्रिसाम्ये॥ पूर्वा॥ रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी ति-
थिरिति ब्रह्मवैवर्तात्॥ येषां प्रदोषव्याप्तिरपि निर्णायिका॥ तेषां मते उत्तरेति स्कंदपुराणे॥ माघकृष्णचतुर्दश्यां

रविवारोयदाभवेत्॥भौमोवाथभवेद्देविकर्तव्यंव्रतमुत्तमं॥शिवयोगस्ययोगेतुतद्भवेदुत्तमोत्तममिति॥तथाच
॥त्रयोदशीकलाप्येकामध्येचैवचतुर्दशी॥अंतेचैवसिनीवालीत्रिस्पृशांशिवमर्चयेदिति॥पारणंच॥स्कंद
पुराणेएवतिथ्यंतेतिथिमध्येचविहितं॥कृष्णाष्टमीस्कंदषष्ठीशिवरात्रिचतुर्दशी एताःपूर्वयुताःकार्यास्तिथ्यं
तेपारणंभवेदिति॥उपोषणंचतुर्दश्यांचतुर्दश्यांचपारणं॥कृतैः॥सुकृतलक्षैश्चलभ्यतेवाथवानवेति॥त
त्र॥सात्वस्तमयपर्यंतव्यापिनीचेत्परेहनि॥दिवैवपारणंकुर्यात्पारणान्नास्तिदोषभागितिशिवरात्रिव्रतकर
णप्रवृत्तकालादर्शादिलिखितवचनात्तिथ्यंतेव्रतीस्यदिवापारणस्यकर्तुंशक्यत्वेतिथ्यंते॥नोचेत्तिथि
मध्येएवेतिव्यवस्था॥इदंव्रतंसंयोगपृथक्त्वन्यायेननित्यंकाम्यंच॥तथाच॥माधवीये॥स्कांदे॥परात्प
रतरंनास्तिशिवरात्रिपरात्परं॥नपूजयतिभक्त्येशंरुद्रंत्रिभुवनेश्वरं॥जंतुर्जन्मसहस्रेषुभ्रमतेनात्रसंशय
इति॥अकरणेप्रत्यवायश्रुतेः॥वर्षेवर्षेमहादेविनरोनारीपतिव्रता॥शिवरात्रौमहादेवंनित्यंभक्त्याप्रपूज
येदितिवीप्साश्रुतेः॥अर्णवोयदिवाशुष्येत्क्षीयते॥हिमवानपि॥चलंत्येतेकदाचिद्वैनिश्चलंहिशिवव्रतमि ४८
तिवचनाच्चनित्यता॥ममभक्तस्तुयोदेविशिवरात्रिमुपोषकः॥गणत्वमक्षयंदिव्यमक्षयंशिवशासनं॥सर्वा

न्भुक्त्वा महाभोगानन्ततो मोक्षमवाप्नुयादिति स्कांदात्॥ द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकं तु वै॥ तत्रैवेशानसंहि-
तावचनात्॥ काम्यमा॥ तत्रैव॥ शिवरात्रिव्रतं नाम सर्वपापविनाशनं॥ आचंडालमनुष्याणां भुक्तिमुक्तिप्रदायकं॥ अथ
मत्र संक्षेपतः शिवरात्रिव्रतानुष्ठानप्रकारः॥ धृतत्रिपुंड्रुद्राक्षस्तिथ्याद्युल्लिख्य शिवप्रीतिकामः॥ शिवरात्रिव्रतं
ह्येतत्करिष्येऽहं महाफलं॥ निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते॥ चतुर्दश्यां निराहारो भूत्वा शंभो परेऽहनि॥ भोक्ष्ये
ऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वरेति पठित्वा जलमुत्सृजेत्॥ ततो नित्यकृत्यं विधाय रात्रौ प्रथमप्रहरेऽहं शिवपू-
जां करिष्य इति संकल्प्य॥ पूर्वप्रतिष्ठिते लिंगेऽप्रतिष्ठिते वा तद्देवप्राणप्रतिष्ठां कृत्वा वक्ष्यमाणपार्थिवलिंगे वा पूजा-
प्रकारेण पंचाक्षरेण वैदिकेन वा पौराणमंत्रैर्वा प्रणवादिचतुर्थ्यन्तनमोऽन्तशिवनाम्ना वावाहनाद्युपचारैः पूजयेत्
॥ तत्र विशेषः॥ ॐ ह्रीं ईशानाय नमः॥ इति प्रथमप्रहरे दुग्धेन स्नपनं॥ शिवरात्रिव्रतं देव पूजाजपपरायणः॥ करो-
मि विधिवद्दत्तं गृहाणार्घ्यं महेश्वरेत्यर्घ्यदानं॥ ततस्तन्मंत्रजपेन तत्कथाश्रवणादिभिर्वा जागरणं॥ तद्ध्यानं तज्जपः
स्नानं तत्कथाश्रवणादिकं॥ उपवासकृतां ह्येते गुणाः प्रोक्ता मनीषिभिरिति वचनात्॥ द्वितीयप्रहरे॥ ॐ ह्रीं अघोरा-
य नम इति दध्ना स्नपनं॥ नमः शिवाय शांताय सर्वपापहराय च॥ शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सहेति चार्घ्यदा-

नं॥ तृतीयप्रहरे॥ ॐ ह्रौं वामदेवाय नम इति घृतेन स्नपनं॥ दुःखदारिद्र्यशोकेन दग्धोहं पार्वतीपते॥ शिवरात्रौ ददाम्यर्घमु
माकांत गृहाणमेद्य सर्घदानं॥ चतुर्थे॥ ॐ ह्रौं सद्योजाताय नम इति मधुना स्नपनं॥ एवं मूलमंत्रजपादिना रात्रिमतिवा
४८ ह्य॥ प्रभाते॥ अविघ्नेन व्रतं देव त्वत्प्रसादात्समापितं॥ क्षमस्व जगतां नाथ त्रैलोक्याधिपते हर॥ यन्मयाद्य कृतं पु
ण्यं तद्रुद्रस्य निवेदितं॥ त्वत्प्रसादान्महादेव व्रतमद्य समर्पितं॥ प्रसीदो भव मे श्रीमन्सद्गतिः॥ प्रतिपाद्यतां॥ त्वदालो
कनमात्रेण पवित्रोस्मि न संशयः॥ इति व्रतं समर्पयेत्॥ परदिने यथाशक्ति ब्राह्मणान्भोजयित्वा॥ संसारक्लेशदग्ध
स्य व्रतेनानेन शंकर॥ प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भवेति संप्राप्य॥ बंधुभिः॥ सह पारणं कुर्यादिति॥ सच्छा
स्त्राब्धिभवो भवंप्रजजता सौख्यावबुधैर्वर्धकः॥ श्रीमच्छैवविरोधिदुर्जनमहाविंताब्धिहृद्धिप्रदः॥ संसारोत्थवणाता
पत्रच्छकृति विदां विश्लिष्टसद्भावियो॥ दीनानामतितापकंचसततं बिंदुश्चकोरप्रियः॥ २॥ श्रोतस्तेन समीहितार्थह
नना संक्षिप्तधीगोचरः सतत्त्वकौमुदकुड्मलस्फुरणकृत्बुधीमनो ज्ञापकृत्॥ हृत्खे दैवसुधाकरोयमुदियाद्दीना
प्रियाणां सदा॥ तद्वाक्यैः परितिःसृतैः स्वकीरणैर्हृत्स्वहमोहं तमः॥ ३॥ प्रत्यूहपाटकणेन हृतपक्षयोः कृष्णभद्रकृलि ४८
रक्षकृष्णयोः॥ कर्मदक्षसुरशिष्टशिक्षयोर्बाल्यगाढजपरोहितेक्षयोः॥ ४॥ स्नाननाथमतमप्यवादयो॥ द्वैतवा

॥ श्रीगणेशाय नमः ॥ ॥ तपोयज्ञदानादिभिः शुद्धबुद्धिर्विरक्तो नृपादौ पदे तुच्छबुद्ध्या ॥ परित्यज्य सर्वं यदाप्नो-
ति तत्त्वं परं ब्रह्म नित्यं तदेवाहमस्मि ॥ १ ॥ दयालुं गुरुं ब्रह्मनिष्ठं प्रशान्तं समाराध्य मत्या विचार्य स्वरूपम् ॥ यदा-
प्नोति तत्त्वं निदिध्यास्य विद्वान् परं ॥ २ ॥ यदानन्दरूपप्रकाशस्वरूपं निरस्तप्रपंचं परिच्छेदशून्यं ॥ अहंब्रह्मवृ-
त्त्येकगम्यं तुरीयं परं ॥ ३ ॥ यदाज्ञानतो भाति विश्वं समस्तं विनष्टं च ॥ सद्यो यदात्मप्रबोधे ॥ मनोवागतीतं विशु-
द्धं विमुक्तं परं ॥ ४ ॥ निषेधे कृते नेति नेतीति वाक्यैः समाधिस्थितानां यदाभाति पूर्णं ॥ अवस्थात्रयातीतम-
द्वैतमेकं परं ॥ ५ ॥ यदानन्दलेशैः समानन्दि विश्वं यदाभाति सत्त्वे तदाभाति सर्वं ॥ यदालोचने रूपमन्यत्समस्तं प-
रं ॥ ६ ॥ अनन्तं विभुं सर्वयोनिं निरीहं शिवं संगहीनं यदोंकारगम्यं ॥ निराकारमत्युज्ज्वलं मृत्युहीनं परं ॥ ७
॥ यदानन्दसिन्धौ निमग्नः पुमान्स्यादविद्याविलासः समस्तप्रपंचः ॥ तदा न स्फुरत्यद्भुतं यन्निमित्तं परं ॥ ८ ॥
स्वरूपानुसंधानरूपां स्तुतिं यः पठेदादराद्भक्तिभावो मनुष्यः ॥ शृणोतीह वा नित्यमुद्युक्तचित्तो भवेद्विष्णुरत्रैव वेदप्रमा-
णम् परं ॥ ९ ॥ न भूमिर्न तोयं न तेजो न वायुर्न खं नेन्द्रियं वा न तेषां समूहः ॥ अनैकान्तिकत्वात्सुषुप्त्येकसिद्धस्तदेकोऽवशि-
ष्टः शिवः केवलोऽहं ॥ न वर्णाश्रमाचारधर्मा न मे धारणाध्यानयोगादयोऽपि ॥ अनात्माश्रयोऽहंममाध्या-

सद्भावात्तदेकोवशिष्टः शिवः केवलोहं ॥२॥ नमातापितावानदेवानलोकानवेदानयज्ञानतीर्थंब्रुवन्ति॥ सुषुप्तौनिरस्ता
तिशून्यात्मकत्वात्तदेकोवशिष्टः॥३॥ नसांख्यंनशैवंनतत्पांचरात्रंनजैनंनमीमांसकादेर्मतंवा॥ विशिष्टानुभूत्याविशुद्धा
त्मकत्वात्तदेकोवशिष्टः॥४॥ नशुक्लंनकृष्णंनरक्तंनपीतंनकुब्जंनपीनंनह्रस्वंनदीर्घं॥ अरूपंतथाज्योतिराकारक
त्वात्तदेकोवशिष्टः॥५॥ नचोर्ध्वंनचाधोनचान्तर्नबाह्यंनमध्यंनतीर्यङ्नपूर्वापरादिक्॥ वियद्व्यापकत्वादखंडै
करूपस्तदेकोवशिष्टः॥६॥ नशास्तानशास्त्रंनशिष्योनशिक्षानचत्वंनचाहंनचायंप्रपंचः॥ स्वरूपावबोधोविकल्पासहिष्णुस्त
देकोवशिष्टः॥७॥ नजाग्रन्नमेस्वप्नकोवासुषुप्तिर्नविश्वोनवातैजसःप्राज्ञकोवा॥ अविद्यात्मकत्वात्त्रयाणांतुरीय
स्तदेकोवष्टः॥८॥ अपिव्यापकत्वाद्धितत्त्वप्रयोगात्स्वतःसिद्धभावादनन्याश्रयत्वात्॥ जगत्तुच्छमेतत्समस्तंतद
न्यत्तदेकोवशिष्टः॥९॥ नचैकंतदन्यद्द्वितीयंकुतःस्यान्नवाकेवलत्वंनचाकेवलत्वं॥ नशून्यंनचाशून्यमद्वै
तकत्वात्कथंसर्ववेदान्तसिद्धंब्रवीमि॥ १० ॥ इतिश्रीमच्छंकराचार्यविरचितंसिद्धांतबिंदुस्तोत्रंसमाप्तम्॥
प्रशान्तचित्तायजितेन्द्रियायप्रोक्तंशिरःपक्षसमाश्रिताय॥परात्मवेत्तोऽस्मिनिवेशितायनमोऽस्तुतेज्ञानप्रदाय
नित्यं॥ ॥

दर्जिनदुष्युमादयोः॥ तत्त्वकस्य कुमवावसादयोः॥ शंकरस्य नतिरस्तु पादयोः॥४॥ सदानन्दगिरिर्निर्दिष्टः श्रीमच्छै
वसुधाकरं॥ कृत्वार्पियन्महेशाय श्रीकलिंगस्वरूपिणे॥५॥ दुर्गं धात्रीं ग्रीयो धनदसदनं नन्दनवनं तृणायेदं का
कं विधिमपि वराकं॥ क्षितिपतिं॥ नमन्यते नस्माद्दृहतदवसृष्टं क्षितिपतिः॥ स्वरूपोलक्ष्मेमं स्मरति सततं तोस्करवक
रौ॥६॥ रसेन्दुनंदनृवर्षे विक्रमादित्यनृपतेः॥ पूर्णोयं कार्तिके शुक्ले त्रयोदश्यां स्कसंग्रहः॥७॥ ॥इति श्रीमन्महा
महेन्द्रमहाराणाश्रीस्वरूपसिंहप्रेरितश्रीमत्परमहंसपरिव्राजकाचार्यश्रीसदानन्दस्वामिविरचिते श्री शैव
सुधाकरे पञ्चविंशः किरणः॥२५॥ समाप्तश्चायं शैवसुधाकरः॥ संवत १९२२॥ शाके १७८७॥ आषाढकृ
ष्णतृतीयायां चंद्रवासरे॥ ॥लिखितं सूर्यदत्तविजैपुरवासिना॥ भाभाषायां सुजानमल्लशर्मणा॥
लिखापितं ब्रह्मचारीजी श्रीलक्ष्मणानंदजी श्रीपारंपर्यधर्मनिरूपणार्थं॥ श्रीशिवार्पणमस्तु ॥ ॰ ॥
यह पुस्तक मुंबुई बंदर में लक्ष्मीनारायण गवडब्राह्मण परशुरामपुरकाने शिलाक्षर छपाया॥ ब्रह्मचारीजी
श्रीलक्ष्मणानंदजी ने पुस्तक छपाया लक्ष्मीनारायण मारफत॥ शुभंमस्तु॥ ॥शुभम्॥ ॰ ॥
॥ श्री ॥ श्री ॥ ॰ ॥ ॰ ॥ श्री ॥ श्री ॥ श्री॥

